# अष्टावक्रसंहिता ।

## आत्मानुभवोपदेशवर्णनं नाम प्रथमं प्रकरणम् ।

जनक उवाच ।

कथं ज्ञानमवाप्नोति कथं मुक्तिर्भविष्यति ।
वैराग्यं च कथं प्राप्तमेतद्ब्रूहि मम प्रभो ! ॥१॥

अष्टावक्र उवाच ।

मुक्तिमिच्छसि चेत् तात ! विषयान् विषवत् त्यज ।
क्षमार्जवदयातोषसत्यं पीयूषवद्भज ॥१॥

---

सच्चिदानन्दमद्वैतं सर्वाधिष्ठानमुत्तमम् ।
नत्वाष्टावक्रसूत्रस्य दीपिका तन्यते परा ॥ १ ॥

इह खलु प्रार्थ्यविज्ञानसम्पन्नः परमकारुणिकोऽष्टावक्रमुनिः मुक्तिकामनया समुपेतं शिष्यं शमदमाद्यधिकारस्वीकारोपदेशपूर्वकमात्मतत्त्वमुपदिशति मुक्तिमिच्छसि इति ।

तात इति वात्सल्यसम्बोधने, हे शिष्य ! त्वं सर्वानर्थनिवृत्तिं परमानन्दावाप्तिरूपां मुक्तिमिच्छसि चेत्, तर्हि विषयान् विषवत् त्यज । यथा विषम् अनर्थहेतुत्वात् त्यज्यते तथा विषयान् देहादीन् अनर्थहेतुभूतांस्त्यज । तत्राहं ममेत्यभिमानासक्तिं मा कार्षीरित्यर्थः । अनेन वाक्यपदार्थानुसन्धानोपदेशेन बाह्येन्द्रियनिग्रहरूपदमाधिकार उपदिष्टः ।

न पृथ्वी न जलं नाग्निर्न वायुर्द्यौर्न वा भवान्।
एषां साक्षिणमात्मानं चिद्रूपं विद्धि मुक्तये ॥२॥

---

अथ अन्तःकरणनिग्रहरूपमात्मशीकारमुपदिशति क्षमा इति। क्षमा नाम सर्वसहनं सर्वाधिष्ठानत्वमात्मधर्मः। आर्जवं नाम अविद्याकृतकुटिलसम्बन्धाभावः सोऽपि आत्मधर्मः। दया नाम निरुपाधिकं सर्वहितानुबन्धित्वं सोऽपि आत्मधर्मः। तोषो नामात्मसुखं तदपि आत्मस्वरूपम्। सत्यं नाम कालत्रयाबाध्यं स्वरूपं तदपि आत्मैव। एवंविधमात्मरूपं पीयूषवद्भज। क्षमादिकं यथा पीयूषम् अमरहेतुत्वात् सेव्यते तथा सेव्यस्वेत्यर्थः। शमदमादिसाधनचतुष्टयसम्पन्नमधिकारिण शिष्यं प्रति भगवान् अष्टावक्रो मुनिर्मुक्तिमुपदिशति ॥ १ ॥

ननु पाञ्चभौतिको देह एवात्मा। तथा च भूतानां तद्धर्माणां च त्यागो न सम्भावितः। न हि पृथिव्यादीनां स्वभावभूतो गन्धादिः कालत्रयेऽपि त्यज्यत इत्याशङ्क्य पृथिव्यादिस्वरूपस्त्वं न भवसीत्याह न पृथ्वी इति।

हे शिष्य! पृथिव्यप्तेजोवाय्वाकाशादिरूपस्त्वं न भवसि ततस्त्वमनात्मधर्मान् विषयांस्त्यजेत्यर्थः।

ननु अहं गौरः स्थूलः कृष्णो कृश इत्यादिप्रतीतिः पाञ्चभौतिको देह एवात्मा इत्यत आह एषाम् इति। एषां देहादीनां साक्षिणम् एव आत्मानं विद्धि साक्षात् कुरु, तथा च देहादेः साक्षी आत्मा देहादिभ्यो भिन्नः। यथा घटद्रष्टा घटाद्भिन्नस्तथेत्यर्थः।

नैयायिकाभिमतमात्मानं निराकरोति चिद्रूपं विद्धि इति। आत्मज्ञानस्य फलमाह मुक्तये इति ॥ २ ॥

यदि देहं पृथक्कृत्य चिति विश्राम्य तिष्ठसि ।
अधुनैव सुखी शान्तो बन्धमुक्तो भविष्यसि ॥३॥
न त्वं विप्रादिको वर्णो नाश्रमी नाक्षगोचरः ।
असङ्गोऽसि निराकारो विश्वसाक्षी सुखी भव ॥४॥

---

आत्यन्तिकी दुःखनिवृत्तिर्मुक्तिरिति नैयायिकाः । दुःखप्रागभावपरिपालनं मुक्तिरिति प्राभाकराः । आत्महानिर्मुक्तिरिति बौद्धाः । इत्यादिमतानि निराकुर्वन्नेव आत्मज्ञानाज्जीवन्मुक्तिदशामाह यदि इति ।

हे शिष्य ! यदि त्वं देहं पृथक् कृत्य देहादिभ्यो विलक्षणं विविच्य चिति विश्राम्य चिदेकाग्रो भूत्वा तिष्ठसि, तर्हि त्वं अधुनैव इदानीं जीवनदशायामेव सुखी प्राप्तपरमानन्दः, अतएव शान्तः सुप्रसन्नमनाः बन्धमुक्तः कर्तृत्वभोक्तृत्वप्रमुखानर्थरहितो भविष्यसि इत्यर्थः ॥ ३ ॥

ननु वर्णाश्रमप्रयुक्तानि कर्माणि विहाय, चिति विश्रामावस्थानं कथं मुक्तिरित्याशङ्क्य आत्मा वर्णाश्रमविलक्षण इत्याह न त्वम् इति । त्वं वर्णाश्रमविलक्षण इत्यर्थः ।

ननु अहं ब्राह्मण इत्यादि अनुभवस्य सद्भावादात्मनो वर्णाश्रमित्वमित्याशङ्क्याह नाक्षगोचर इति साक्षित्वात् अयं ब्राह्मण इत्यादि प्रत्ययास्तु देहगोचरा एव नतु आत्मगोचरास्तस्य, इन्द्रियज्ञानागोचरत्वादित्यर्थः ।

तर्हि कीदृशोऽहमिति आशङ्काकाङ्क्षां निरूपयन्नेव तद्विश्रान्तिफलमनुवदति असङ्गः इति, असङ्गः सर्वोपाधिसङ्गरहितः, निराकारो विश्वसाक्षी त्वम् असि अतएव असङ्गादिरूपस्य

धर्माधर्मौ सुखं दुःखं मानसानि न ते विभो ! ।
न कर्त्तासि न भोक्तासि मुक्त एवासि सर्वदा ॥५॥
एको द्रष्टासि सर्वस्य मुक्तप्रायोऽसि सर्वदा ।
अयमेव हि ते बन्धो द्रष्टारं पश्यसीतरम् ॥६॥

---

तव वर्णाश्रमविलक्षणत्वात् कर्मासक्तिं परिविहाय चिति विश्राम्य सुखी प्राप्तपरमानन्दो भव इत्यर्थः ॥ ४ ॥

ननु वेदोदितं कर्म विहाय चिति विश्रान्तावपि प्रत्यवायप्रसङ्ग इत्याशङ्क्याह धर्माधर्मौ इति ।

धर्माधर्मादयो मनोधर्मा एव, व्यापकत्वेऽपि तैः सह तव सम्बन्धो नास्तीत्यर्थः ।

कुत इत्यत आह न कर्त्ता इति । किं च विहितनिषिद्धकर्मकर्तुः धर्माधर्मादिद्वारा सुखदुःखभोक्तृत्वम्, तदपि तव नास्ति अकर्तृस्वरूपत्वात्त्वं सर्वदा मुक्त एवासि । अज्ञानमात्रविजृम्भिते सुखदुःखे ते तु चितिविश्रान्त्यैव अज्ञाननिवृत्त्या न विजृम्भेते इत्यर्थः ॥ ५ ॥

ननु अकर्तृस्वभावस्यैवास्य नित्यमुक्तस्यात्मनो बन्धः किंनिबन्धनो यस्य [illegible] निवृत्त्यर्थं विवेकिनो यतन्त इत्याशङ्क्य नित्यमुक्तस्यापि प्रातीतिकं बन्धहेतुमाह एक इति ।

हे शिष्य ! सर्वस्य द्रष्टा प्रतिशरीरम् एकः त्वम् असि, ततश्च व्यापकत्वात् सर्वदा मुक्तप्रायोऽसि । देहाध्यासवशतो बन्धे प्रतीयमानेऽपि वस्तुगत्या मुक्तोऽसीत्यर्थः ।

अयम् इति हि निश्चितम्, अयमेव ते तव बन्धो, यदि इतरं देहादिरूपं परिच्छिन्नं द्रष्टारं पश्यसि इत्यर्थः ॥ ६ ॥

अहं कर्तेत्यहंमानमहाकृष्णाहिदंशितः।
नाहं कर्तेति विश्वासामृतं पीत्वा सुखी भव ॥७॥
एको विशुद्धबोधोऽहमिति निश्चयवह्निना।
प्रज्वाल्याज्ञानगहनं वीतशोकः सुखी भव ॥८॥
यत्र विश्वमिदं भाति कल्पितं रज्जुसर्पवत्।
आनन्दपरमानन्दः स बोधस्त्वं सुखं चर ॥९॥

---

पूर्वं बन्धहेतुरुक्तः अथानर्थहेतुं वदन्नेव तन्निवृत्तिपरमानन्दप्राप्त्युपायमनुवदति अहं कर्ता इति।

हे शिष्य! अहं कर्तेति एवंरूपो योऽहंमानः अहमिति आत्मनि कर्तृत्वाभिमानस्वरूपो महान् कृष्णसर्पः सुखदुःखविषयी एव अहिः तेन दंशितः कवलीकृतोऽन्तःकरणात् अहं न कर्ता अहं अकर्ता आत्मा, इत्येवं रूपं विश्वासामृतं निश्चयामृतम्, पीत्वा अनुभूय सुखी भव, प्राप्तपरमानन्दो भवेत्यर्थः ॥ ७ ॥

ननु आत्मज्ञानामृतपानं किं द्वारा सुखसाधनमित्याशङ्क्य अज्ञानकाननदहनद्वारा ज्ञानाग्निः सुखसाधनमित्याह एको विशुद्धबोधोऽहम् इति।

एकः सजातीयविजातीयस्वगतभेदरहितः, विशुद्धबोधः स्वप्रकाशः चिदात्मा अहमिति निश्चयाग्निना, अज्ञानाख्यं गहनं वनम्, प्रज्वाल्य प्रकर्षेण दग्ध्वा शोकमोहरागद्वेषप्रवृत्तिजन्मापायात् वीतशोको विगतदुःखः सन्, सुखी भव इत्यर्थः ॥ ८ ॥

ननु आत्मज्ञानेन अज्ञानकाननदाहे कृतेऽपि जगतः प्रत-

**मुक्ताभिमानी मुक्तो हि बद्धो बद्धाभिमान्यपि ।**
**किंवदन्तीह सत्येयं या मतिः सा गतिर्भवेत् ॥१०॥**

---

ननु अज्ञानादनिवृत्तेः वीतशोकः कथं स्यादित्याशङ्क्य प्रपञ्चस्य रज्जुभुजङ्गतुल्यत्वात् अज्ञानादिनिवृत्तौ दुःखहेतोरभावाद्वीतशोकता स्यात् एव इत्याह यत्र इति ।

यत्र बोधे, इदं विश्वं रज्जुसर्पवत् कल्पितम् अधिष्ठानाज्ञानकल्पितं भाति, स बोधः चिदात्मा त्वं सुखं चर । यथा स्वप्नदशायामज्ञानकल्पितं व्याघ्रादिकं पश्यति, जाग्रद्बोधे निवर्त्य सुखं चरति तद्वदित्यर्थः ।

ननु दुःखहेतुप्रपञ्चनिवृत्तौ दुःखाभावमात्रं स्यात्सुखं तु कथं स्यादित्याशङ्क्य स्वभावत एव त्वं नित्यानन्दानन्दस्वरूप इत्याह आनन्दपरमानन्द इति । आनन्देभ्यो मनुष्यलोकदेवलोकानन्देभ्यः परम उत्कृष्टः आनन्दस्त्वमित्यर्थः । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः ॥ ९ ॥

ननु सर्वं रज्जुसर्पवत् कल्पितं स्वभावतस्त्वानन्द एवात्मेति चेत्तर्हि बन्धमोक्षावात्मनः किन्निबन्धनावित्याशङ्क्याह मुक्ताभिमानी इति ।

हि निश्चितं मुक्ताभिमानी मुक्त अपि च बद्धाभिमानी बद्धः, अत्र किंवदन्तीं प्रमाणयति किंवदन्ती इति । "या मतिः सा गतिर्भवेद्" इह इयं प्रसिद्धा किंवदन्ती विद्वज्जनश्रुतिः सत्या यथार्थितार्था । "तं विद्याकर्मणी समारभेते पूर्वप्रज्ञा च" इति श्रुतिपरिगृहीतत्वात् । "यं यं वापि स्मरन् भावम्" इत्यादि स्मृतिपरिगृहीतत्वाच्च । तथा चाभिमानिकावेव बन्धमोक्षौ न तु वास्तवावित्यर्थः पूर्वमुक्तोऽप्ययमर्थो दुर्बोधत्वात् पुनः पुनः शिष्यबोधार्थमुक्त इत्यर्थः ॥ १० ॥

आत्मा साक्षी विभुः पूर्ण एको मुक्तश्चिदक्रियः ।
असङ्गो निःस्पृहः शान्तो भ्रमात्संसारवानिव ॥११॥
कूटस्थं बोधमद्वैतमात्मानं परिभावय ।
आभासोऽहं भ्रमं मुक्त्वा भावं बाह्यमथान्तरम् ॥१२॥

---

ननु जीवात्मनः पारमार्थिकावेव बन्धमोक्षौ इति तार्किकाद्याशङ्कामपाकर्तुमाह । आत्मा इति ।

आत्मा भ्रमात् देहादौ आत्मतादात्म्यभ्रमात् संसारवानिव प्रतीयते न तु वस्तुतः संसारी ।

अत्र दश हेतूनाह साक्षी इति । कर्तृत्वाहङ्कारादेः साक्षी न तु कर्त्ता, विभुः विविधं भवति यस्मादिति विभुः सर्वाधिष्ठानम्, पूर्णः व्यापकः एकः सजातीयविजातीयस्वगतभेदरहितः, मुक्तः वस्तुगत्या मायातत्कार्य्यातीतः, चित् स्वप्रकाशचैतन्यरूपः, अक्रियः चेष्टारहितः असङ्गः सर्वसम्बन्धशून्यः, "असङ्गो ह्ययं पुरुषः" इति श्रुतेः । निःस्पृहः विषयाभिलाषरहितः शान्तः प्रवृत्तिनिवृत्तिदेहाद्यन्तःकरणधर्मरहितः । तस्माद्वस्तुतो न संसारीत्यर्थः ॥ ११ ॥

अहं परिच्छिन्नो ममेदं देहादिकम् सुखी दुःखी च अहमिति भ्रमस्य अनादिपरम्परागतस्य सकृद्भावनया निवर्तयितुमशक्यत्वात् "आवृत्तिरसकृत् उपदेशात्" इति व्याससूत्राच्च । पुनः पुनरद्वैतात्मभावनां विजातीयभावनानिवृत्तिपुरःसरामुपदिशति कूटस्थम् इति ।

हे शिष्य ! आभासोऽहम् अहङ्कारोऽहमिति भ्रमं मुक्त्वा, बाह्यं ममेदं देहादिकमिति बाह्यपदार्थविषयं भावं तथा-

देहाभिमानपाशेन चिरं बद्धोऽसि पुत्रक ! ।
बोधोऽहं ज्ञानखड्गेन तन्निःकृत्य सुखी भव ॥१३॥
निःसङ्गो निष्क्रियोऽसि त्वं स्वप्रकाशो निरञ्जनः
अयमेव हि ते बन्धः समाधिमनुतिष्ठसि ॥१४॥

---

वर्त्तां मुक्त्वा अथ च आन्तरं भावं सुखी दुःखी मूढोऽह-मिति आन्तरपदार्थविषयं भावं भावनां मुक्त्वा अकर्त्तारं कूटस्थम् असङ्गबोधस्वरूपम् अद्वैतमात्मानं परि समन्तात् व्यापकं भावय इत्यर्थः ॥ १२ ॥

अनादिरयं देहाभिमानः सकृद्भावनया न निवर्त्तत इति पुनः पुनर्ज्ञानखड्गेन तं निःकृत्य सुखी भवेत्याह देहाभिमान-[पा]शेन इति ।

[हे] पुत्रक ! हे शिष्य ! त्वं देहोऽहमिति अभिमानपाशेन [चिरं ब]हुकालं बद्धोऽसि अतो बोधोऽहं चिद्रूपोऽहमिति [ज्ञानखड्गे]न पुनः पुनः तं पाशम् नितरां छित्वा सुखी भव ॥ [१]३ ॥

[चित्त]वृत्तिनिरोधरूपः समाधिरेव केवलो बन्धनिवृत्तिहेतु-[रिति] पातञ्जलमतमपाकर्त्तुमाह । निःसङ्ग इति ।

हे शिष्य ! त्वं वस्तुतो निःसङ्गः सर्वसम्बन्धशून्योऽसि, तथा क्रियारहितोऽसि ।

अत्र हेतुमाह स्वप्रकाशो निरञ्जन इति । निष्क्रियस्य समाध्यनुष्ठानं यत् अयमेव हि निश्चितं बन्धः तथा च ज्ञानातिरिक्तोपायानुष्ठानमात्रं प्रत्युत बन्ध एव इत्यर्थः ॥१४॥

तदेवमात्मज्ञानातिरिक्तः समाधिरपि पूर्वं निराकृतः, अत्र

त्वया व्याप्तमिदं विश्वं त्वयि प्रोतं यथार्थतः।
शुद्धबुद्धस्वरूपस्त्वं मा गमः क्षुद्रचित्तताम्॥१५॥
निरपेक्षो निर्विकारो निर्भरः शीतलाशयः।
अगाधबुद्धिरक्षुब्धो भव चिन्मात्रवासनः॥१६॥

---

परिपूर्णे शुद्धबुद्धात्मनि विपरीतधियमुत्सारयन्नेव चित्तशुद्धि-मुपसंहरति श्लोकद्वयेन। त्वया इति।

हे शिष्य! इदं विश्वं त्वया व्याप्तं कनकेन इव कटक-कुण्डलादिकं यथा तथा इदं विश्वं त्वयि प्रोतं मृदीव घट-शरावादिकं हे शिष्य! त्वं यथार्थतः परमार्थतः शुद्धः अविद्यातत्कार्यप्रपञ्चातीतः बुद्धः स्वप्रकाशः चिद्रूपोऽसि एवं च, "सर्वगन्धः सर्वरसो न इति न इति" इति श्रुतिद्वया-नुसारेण उक्ताभ्याम् अध्यारोपापवादाभ्यां निःप्रपञ्चमात्मतत्त्व-मुपदिष्टं भवति। हे शिष्य! परिपूर्णशुद्धबुद्धस्वरूपस्त्वं क्षुद्र-चित्ततां विपरीतचित्तवृत्तिं मा गमः मा कार्षीः इत्यर्थः॥१५॥

प्रतीयमानाः षडूर्मयः षड्भावविकाराश्च न त्वद्गताः तु तद्विलक्षणश्च इत्याह। निरपेक्ष इति।

हे शिष्य! त्वं निरपेक्षः अशनायापिपासादिषडूर्मिमर्मा-तीतः। तथा निर्विकारः "जायते अस्ति वर्धते विपरिणमते अपक्षीयते विनश्यति" इत्येवंविधाः यास्कादिप्रोक्ताः षड्भाव-विकारास्तत्संसर्गरहितस्त्वमित्यर्थः।

तर्हि कीदृशोऽहमित्यत आह, निर्भर इति। निर्भरः चिद्घनरूपः शीतलः सुखरूपः आमुक्तिसमयमभिव्याप्य शेते तिष्ठतीति आशयः, अगाधः अनन्ता अतर्क्या अपरिच्छिन्ना

साकारमनृतं विद्धि निराकारं तु निश्चलम् ।
एतत्तत्त्वोपदेशेन न पुनर्भवसम्भवः ॥१७॥
यथैवादर्शमध्यस्थे रूपेऽन्तः परितस्तु सः ।
तथैवास्मिन् शरीरेऽन्तः परितः परमेश्वरः ॥१८॥

---

बुद्धिः स्वरूपमेव तस्य तद्रूपः, असङ्गः अविद्याजनितक्षोभरहि-तस्त्वं वस्तुतोऽसि, अतस्त्वं क्रियामात्ररहितचिन्मात्रनिष्ठो भव इत्यर्थः ॥ १६ ॥

"विषयान् विषवत् त्यज सत्यं पीयूषवद्भज" इति मोक्षो-पायः प्रथमश्लोके समुपदिष्टः परन्तु विषयाणां विषतुल्यत्वे सत्यात्मनः पीयूषतुल्यत्वे च हेतुर्नोक्तस्तत्र हेतुं वदन्नेव षोडश-श्लोकेनोपदिष्टो मोक्षहेतुश्चिदात्मा च साध्यस्तं विश्वं समन्ततो व्याप्य अवस्थितो मुकुर इव स्वाध्यस्तं शरीरादि इति तद्भावा-वस्तिरेव परमपुरुषार्थं इत्युपपत्तिमुखेन प्रकरणार्थं [illegible] श्लोकत्रयेण । "अथ संग्रहश्लोकाः" साकार इत्यादिना साकारम् इति ।

हे शिष्य ! साकारं शरीरादिकम् अनृतं मिथ्या-भूतं विद्धि अतस्तत् विषवत् त्यजेत्यर्थः; निराकारम् आत्म-तत्त्वं निश्चलं कालत्रयावस्थायि विद्धि, सर्वसाक्षित्वात् "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतेश्च । अत एतत्तत्त्वस्य शिष्याय उपदेशेन उपदिश्यमानेन तत्र एव विश्रान्त्यावस्था-नेन न पुनर्भवस्य मोक्षस्य सम्भवः सिद्धिरित्यर्थः ॥१७॥

अथ धर्माधर्मधर्मकस्थूलशरीरात् पुण्यापुण्यसंस्कारलिङ्गशरी-रादिकपर्यन्तं परिपूर्णं चैतन्यं अष्टाभ्यां निरूपयति यथेव इति ।

एकं सर्वगतं व्योम बहिरन्तर्यथा घटे।
नित्यं निरन्तरं ब्रह्म सर्वभूतगणे तथा ॥१९॥

अथ शिष्योक्तमात्मानुभवोल्लासनामकं द्वितीयं प्रकरणम्।

अहो निरञ्जनः शान्तो बोधोऽहं प्रकृतेः परः।
एतावन्तमहं कालं मोहेनैव विडम्बितः ॥१॥

---

यथैवादर्शे प्रतिबिम्बिते शरीरादौ अन्तः मध्ये परितः बहिश्च स आदर्शो व्याप्य वर्त्तते। तथैवाध्यस्ते अस्मिन् स्थूले शरीरे अन्तः परितश्च परमेश्वरः चिदात्मा व्याप्य स्थितः, तथा च "यत्र विश्वमिदं भाति कल्पितं रज्जुसर्पवत्" इत्यादि सर्वोऽपि प्रकरणार्थः संक्षेपतः सूचितः ॥१८॥

आदर्शदृष्टान्ते परिच्छिन्नत्वादिभ्रमापत्तिः, अध्यस्ते शरीरान्तर्वर्तित्वं च न सङ्गमतो घटाकाशदृष्टान्तेन बाह्या-भ्यन्तरव्यापकत्वमाह एकं सर्वगतम् इति।

यथा सर्वगतम् एकं नित्यम् व्योम घटपटादौ बहिरन्तश्च वर्त्तते तथा नित्यम् अविनाशि ब्रह्म सर्वभूतगणे बहिरन्तरं सर्वदा वर्त्तते इत्यर्थः। "एष त आत्मा सर्वान्तर" इति श्रुतेः। अतश्च बोधोऽहमिति ज्ञानखड्गेन देहाद्यध्यासपाशं निःछिद्य मुक्तो भवेत्यर्थः ॥ १९ ॥

इति आत्मानुभवोपदेशनामकं प्रथमं प्रकरणं समाप्तम्।

---

इत्थं गुरूक्तिपीयूषपानादनुभवमात्मनः।
आविश्चकार स्वाशयं शिष्यो निजगुरुं प्रति ॥१॥

तत्र तावदच्छिन्नचिद्रूपात्मानुभवमाविष्कुर्वन्नेव गुरुकृतोप-

यथा प्रकाशयाम्येको देहमेनं तथा जगत्।
अतो मम जगत्सर्वमथवा न च किञ्चन॥

---

कारणापगमाय प्राचीनसंस्कारवशाद्बाधितानुवृत्त्या प्रतीतस्य मोहविडम्बनस्य कारणमाविष्करोति अहो इति।

अहष्टस्याश्रुतस्यानुभवात् अहो इत्याश्चर्यं, अहं निरञ्जनः सर्वोपाधिविनिर्मुक्तः, शान्तः सर्वविकारातीतः, प्रकृतेः परः मायान्धकारस्पर्शशून्यो बोधः, स्वप्रकाशचिद्रूप इत्यर्थः।

गुरूपकारख्यापनाय मोहविडम्बनमनुस्मरति एतावन्तम् इति एतावन्तं गुरूपदेशावधिकालं मोहेन देहात्मविवेकेन विडम्बितः एव साम्प्रतं तु श्रीगुरुप्रसादात् आत्मानन्दं भवोऽस्मीति विवक्षितोऽर्थः॥ १॥

पूर्वकालीनं मोहविडम्बनमुक्तं सम्प्रति गुरुप्रसादात् मम देहात्मविवेकोऽस्तीति सोपपत्तिकमाह यथा इति।

अहं यथा एक एव जगत् प्रकाशयामि, तथा एव एनं स्थूलं देहं प्रकाशयामि, तथा च, देहोऽनात्माऽप्रकाश्यत्वात्घटवा जगत्सदृदित्यर्थः।

कदापि जगदादिदेहात्मनोः सम्बन्ध इत्याशङ्क्य बुद्धि-विचारादाध्यासिकः सम्बन्धः, परमार्थतस्तु च न कश्चित् सम्बन्धः इत्याह अतो मम इति। अतो हेतुत्वात् सर्वं देह-प्रमुखं जगत् मम मदीयं मयि अध्यस्तमित्यर्थः, च अवधारणे, अथवा परमार्थविचारे, किं च न किमपि देहादिकं, मम न च नैव मयि अध्यस्तमित्यर्थः। तदेवमध्यारोपापवादाभ्यां प्रकृतेः परो बोधोऽहमित्येव अत्र स्फुटीकृतम्॥ २॥

सशरीरमहो विश्वं परित्यज्य मयाधुना।
कुतश्चित् कौशलादेव परमात्मा विलोक्यते ॥३॥
यथा न तोयतो भिन्नास्तरङ्गाः फेनबुद्बुदाः।
आत्मनो न तथा भिन्नं विश्वमात्मविनिर्गतम् ॥४॥
तन्तुमात्रो भवेदेव पटो यद्वद्विचारितः।
आत्मतन्मात्रमेवेदं तद्वत् विश्वं विचारितम् ॥५॥

---

ननु लिङ्गदेहात् कारणदेहाच्च विवेकाभावे कथं प्रकृति-रिक्तात्मबोध इत्याशङ्क्य, ततोऽपि विवेकजमात्मानुभवमाह सशरीरम् इति।

अहो इति आश्चर्ये, अधुना सशरीरं लिङ्गशरीरकारण-शरीरसहितम् विश्वं परित्यज्य विचारतः पृथक्कृततया निषिध्य, कुतश्चित् गुरुशास्त्राचार्योपदेशप्रकाशात्, कौशलात् चातुर्यात् एव परमश्चेह आत्मा मया विलोक्यते, नान्यः परमात्मावलोकनोपाय इत्यर्थः ॥ ३ ॥

सशरीरविश्वस्य पृथक्कृततया परित्यज्य, तं दृष्टान्तं निरूपयति यथा न तोयत इति।

यथा तरङ्गाः फेनबुद्बुदाः च, न तोयतो भिन्नाः तद्रूपा-पन्नत्वात्, तथा आत्मविनिर्गतं आत्मनः सञ्जातं आत्मोपा-दानकम्, विश्वम् आत्मनो न भिन्नम् एवं च तोयतरङ्गादिषु दृष्टान्तं यथा सर्वेषामनुमतम्, तथा सच्चिद्रूपोऽहं विश्वाधि-ष्ठानभूतो न मत्तोऽन्यत् विश्वमित्यर्थः ॥ ४ ॥

दृष्टान्तान्तरेण आत्मरूपतया सर्वावभासनं निरूपयति तन्तुमात्र इति।

यथैवेक्षुरसे क्लृप्ता तेन व्याप्तैव शर्करा ।
तथा विश्वं मयि क्लृप्तं मया व्याप्तं निरन्तरम् ॥६॥
आत्माज्ञानात् जगत् भाति आत्मज्ञानान्न भासते ।
रज्ज्वज्ञानादहिर्भाति तज्ज्ञानाद्भासते न हि ॥७॥

---

स्थूलदृष्ट्या तन्तुवैलक्षण्येन प्रतीयमानोऽपि पटो विचारितः विचारेणोक्षितः सन्, यद्वत् यथा तन्तुमात्रो भवेत् अस्ति तद्वत् तथा इदं विश्वं स्थूलदृष्ट्या ब्रह्मवैलक्षण्येनापि प्रतीयमानम्, युक्त्या विचारितं सत् आत्मतत्त्वमेव आत्मसत्तामात्रात्मकमेव एतेन तन्तुः स्वसत्तया यथा पटेऽनुगतस्तथा आत्मापि स्वसत्तया अधिष्ठानभूतो विश्वेऽनुगत इत्यर्थः ॥ ५ ॥

आत्मनैव सर्वं व्याप्तमित्यत्र दृष्टान्तान्तरमाह तथैवेति ।

यथैव इक्षुरसे क्लृप्ता अध्यस्ता, शर्करा तेन मधुरसेन व्याप्तैव सर्वापि व्याप्ता तथा एव मयि नित्यानन्दस्वरूपे क्लृप्तं अध्यस्तम् इदं विश्वं मया नित्यानन्देन निरन्तरं बाह्याभ्यन्तरं व्याप्तम्, तस्मात् विश्वमानन्दात्मस्वरूपम् एव इत्यर्थः । तदेवमस्ति भाति प्रियमित्येवंरूपेण अहमेव सर्वत्र अवस्थित इति श्लोकद्वयविवक्षितोऽर्थः ॥ ६ ॥

विश्वं चिदात्मनो न भिन्नम्, तर्हि केन कारणेनेदं भासते, केन च कारणेन न भासते इत्याशङ्क्याह आत्माज्ञानात् इति ।

आत्मनः अज्ञानात् जगत् भाति, तथा आत्मन अधिष्ठानस्य ज्ञानात् न भासते ।

अधिष्ठानाज्ञानात् अध्यस्तं भातेऽधिष्ठानज्ञानाच्च न भाति लोकप्रसिद्धदृष्टान्तमाह रज्ज्वज्ञानात् इति । हि यथा रज्जु-

प्रकाशो मे निजं रूपं नातिरिक्तोऽस्म्यहं ततः।
यदा प्रकाशते विश्वं तदाहंभास एव हि ॥८॥

अहो विकल्पितं विश्वमज्ञानात् मयि भासते।
रूप्यं शुक्तौ फणी रज्जौ वारि सूर्यकरे यथा ॥९॥

मत्तो विनिर्गतं विश्वं मय्येव लयमेष्यति।
मृदि कुम्भो जले वीचिः कनके कटकं यथा ॥१०॥

---

स्वरूपस्य अज्ञानात् अहिः सर्पो भाति तज्ज्ञानात् रज्जुज्ञानात् न भासते ॥ ७ ॥

ननु आत्माज्ञाने सति आत्मप्रकाशाभावात् जगत् कथं भासते इत्याशङ्क्य स्वरूपेणानन्यत्वादेवेत्याह प्रकाश इति।

प्रकाशो नित्यबोधः मे मम निजं स्वाभाविकं स्वरूपम् अहं ततः प्रकाशात् अतिरिक्तः भिन्नो नास्मि, अतो मम यदा विश्वं प्रकाशते, तदा अहंभासादात्मप्रकाशात् एव भासते, स्वरूपेणैतस्य चेत् भासकं तदा कथमज्ञानमिति चेत् नैवं, न हि स्वरूपेणैतस्याज्ञानविरोधि, किन्तु साधकमेव अन्यथा अज्ञस्य सिद्धिरेव न स्यात् किञ्च आत्मस्वरूपप्रकाशाभावेषु आत्मनोऽपि असत्त्वप्रसक्तिर्जगदान्ध्यप्रसङ्गश्च तस्मात् यदा विश्वं प्रकाशते तदा आत्मस्वरूपप्रकाशादेवेति भावः ॥ ८ ॥

स्वप्रकाशेऽपि मयि कथमज्ञानवशादिदं भासत इति साश्चर्यं सदृष्टान्तमाह अहो इति।

स्वप्रकाशेऽपि मयि अज्ञानात् विकल्पितं रचितं अवस्तु विश्वं मयि भासते अहो आश्चर्यमिदम्, यथा शुक्त्यादौ रूप्यादिकं भासते तद्वदित्यर्थः ॥ ९ ॥

अहो अहं नमो मह्यं विनाशो यस्य नास्ति मे ।
ब्रह्मादिस्तम्बपर्य्यन्तं जगन्नाशेऽपि तिष्ठतः ॥११॥
अहो अहं नमो मह्यमेकोऽहं देहवानपि ।
क्वचिन्न गन्ता नागन्ता व्याप्य विश्वमवस्थितः॥१२

---

ननु मायाविकारत्वात् तत्रैव विश्वमुत्पद्यते तत्रैव ल-
मेति, न तु चैतन्यात्मनि इति सांख्यमतमपाकर्त्तुमाह मत्त
विनिर्गतम् इति ।

इदं विश्वं मत्त एव विनिर्गतम्, मयि एव लयमेवा-
प्राप्स्यति, यथा मृदादौ कुम्भादिकं तद्वदित्यर्थः । न चा
प्रमाणाभाव इति शङ्कनीयं "यतो वा इमानि भूतानि जायन्त
येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति" इ
श्रुतेः ॥ १० ॥

ननु ब्रह्म चेज्जगदुपादानकारणं तर्हि तस्य विकारित्वा
मृदादिवद्विनाशित्वापत्तिरित्याशङ्क्याह अहो इति ।

अहो आश्चर्य्यरूपोऽहं यस्य मम सर्वोपादानभूतस्यापि
विनाशो नास्ति, न च उपादानत्वे सुवर्णादिवद्विनाशित्वापत्तिः
सुवर्णादिवत् विकारित्वानङ्गीकारात् विवर्त्ताधिष्ठानत्वेनै
उपादानत्वस्वीकारात् । अतएव अशेषकार्य्योपादानत्वाद
अविनाशित्वादुत्कृष्टाय मह्यं नमः । ब्रह्मादिदेवताभ्यः प्रकर्ष
विनाशशङ्कां निराकरोति । ब्रह्मादिस्तम्बपर्य्यन्तं यत् जगत्
तस्य नाशेऽपि तिष्ठतः प्रलयेऽपि स्थितिमतो यस्य मे विनाशो
नास्तीत्यर्थः । "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेः ॥ ११ ॥

ननु आत्मा सुखदुःखावच्छेदकदेहभेदेन नाना तथा च

अहो अहं नमो मह्यं दक्षो नास्तीह मत्समः।
असंस्पृश्य शरीरेण येन विश्वं चिरं धृतम्॥१३॥
अहो अहं नमो मह्यं यस्य मे नास्ति किञ्चन।
अथवा यस्य मे सर्वं यद्वाङ्मनसगोचरम्॥१४॥

---

कूटस्थरूपत्वात् न तद्गमनागमनवान् इत्याशयेनाह अहो अहम् इति।

अहो आश्चर्यरूपः अहम्, आश्चर्यरूपाय मह्यं नम इत्यर्थः।

आश्चर्यरूपमेवाह एकोऽहम् इति नानासुखदुःखाद्यवच्छेदकदेहवानपि अहमेक एव यथा नाना सकम्पनिष्कम्पत्वाद्यवच्छेदकजलोपाधिमानपि भानुरेक एवेत्यर्थः।

क्वचित् इति विश्वं व्याप्यावस्थितः परिच्छिन्नाहङ्कारविलक्षणोऽहम्, क्वचित् अपि न गन्ता कुतोऽपि नागन्ता एवेत्यर्थः॥१२॥

ननु आत्मनः निःसङ्गत्वं कथं, शरीरसंसर्गितया जगद्विधारकत्वादित्याशङ्क्याह अहो अहम् इति।

प्रथमपादार्थः पूर्ववदिति ज्ञापनात् मत्समो दक्षो अन्यकार्यविधानचतुरः कोऽपि नास्ति येन हेतुना शरीरेण असंस्पृश्य भूतपिण्डेनोक्तवदसम्बन्धेनैव, चिरं बहुकालम्, विश्वं स्थावरजङ्गमम्, मया धृतम्॥१३॥

ननु अशरीरस्य न जगद्विधारकत्वम्, सम्बन्धस्यैव मिथ्यादेहादिधारकत्वादित्याशङ्क्याह अहो अहम् इति।

अहो आश्चर्यरूपः अहं, तस्मै मे नमः। यस्य मे सम्बन्धि, परमार्थसत्या किञ्चन किमपि नास्ति, परमार्थसतो द्वितीय-

ज्ञानं ज्ञेयं तथा ज्ञाता त्रितयं नास्ति वास्तवम् ।
अज्ञानाद्भाति यत्रेदं सोऽहमस्मि निरञ्जनः ॥१५॥
द्वैतमूलमहो दुःखं नान्यत् तस्यास्ति भेषजम् ।
दृश्यमेतत् मृषा सर्वं एकोऽहं चिद्रसोऽमलः ॥१६॥

---

स्येवाभावात्, अथवा यत् यावत् वाङ्मनसगोचरं तावत् सर्वं यस्य मे मम सम्बन्धि मिथ्यातादात्म्यसम्बन्ध', सुवर्णकुण्डलादिवदित्यर्थः। अतएव सर्वसम्बन्धित्वासम्बन्धित्वाभ्यामाश्चर्यरूपाय मह्यं नम इत्यर्थः ॥ १४ ॥

ननु त्रिपुटीरूपसंसारस्य पारमार्थिकत्वात् कथं मिथ्यातादात्म्यसम्बन्धो जगदात्मनोरित्याशङ्क्याह ज्ञानं ज्ञेयम् इति।

ज्ञानं ज्ञेयं तथा ज्ञाता इत्यादिकं त्रितयं त्रिपुटीरूपं सर्वं वास्तवं पारमार्थिकं नास्ति। यत्र मयि इदं त्रितयम् अज्ञानात् अनिर्वचनीयाज्ञानात् मिथ्यातादात्म्येनाध्यस्तं भाति। अतएव वस्तुगत्याऽहं निरञ्जनः प्रपञ्चमलसम्बन्धशून्योऽस्मि इत्यर्थः ॥ १५ ॥

ननु निरञ्जनस्य कथं दुःखसम्बन्ध इत्याशङ्क्य द्वैतभ्रान्तिमूलक एवासौ न तु वास्तव इत्याह द्वैतमूलम् इति।

अहो आश्चर्यं निरञ्जनस्याप्यात्मनः द्वैतमूलं दुःखं द्वैतभ्रमाद् दुःखाध्यासो न तु वास्तवं दुःखमित्यर्थः।

दुःखाध्यासमहाव्याधेः किं भेषजमित्याशङ्क्याह नान्यत् इति। अमली मायातत्कार्यातीतः चिद्रसः चिन्मात्रस्वरूपः एकोऽहम्, एतत् प्रतीयमानं सर्वं दृश्यं जड़जातं मृषा मिथ्या

बोधमात्रोऽहमज्ञानादुपाधिः कल्पितो मया ।
एवं विमृशतो नित्यं निर्विकल्पे स्थितिर्मम ॥१७॥
न मे बन्धोऽस्ति मोक्षो वा भ्रान्तिः शान्ता निराश्रया ।
अहो मयि स्थितं विश्वं वस्तुतो न मयि स्थितम्॥१८॥

---

न पारमार्थिकमिति बोधात् अस्मात् तस्य त्रिविधदुःखाम्भोधेः मेवत्वं नास्ति इत्यर्थः ॥ १६ ॥

ननु अयं द्वैतप्रपञ्चाभासः, किन्निमित्तः किमुपादानश्च इत्याशङ्क्याह बोधमात्र इति।

बोधमात्रः चिदेकस्वरूपः अहम् एव पारमार्थिकः मया सर्वोपादानभूतेन कर्त्रा अज्ञानात् स्वस्वरूपाज्ञानरूपनिमित्ता-दहङ्कारप्रमुख उपाधिः द्वैतप्रपञ्चः कल्पितः।

एवं विचारस्य फलमाह एवम् इति एवं नित्यं विमृशतो विचारयतो मम, निर्विकल्पे निरस्तद्वैते स्वरूपचैतन्ये, स्थितिः प्रजाता ॥ १७ ॥

ननु स्वरूपचैतन्यप्राप्तिरूपा मुक्तिः प्रागुक्तविचारजन्या चेत् तदा मुक्तेर्विनाशापत्तिः, जन्यभावस्य विनाशित्वनियमात् विचाराजन्या चेत् तदा विचाररहितानामपि मोक्षापत्तिरित्याशङ्क्याह न मे इति।

वस्तुतो मे मम बन्धो नास्ति, वा न च मोक्षोऽपि अस्ति, नित्यचिद्रूपत्वात्।

तर्हि शास्त्रविचारस्य किं फलमित्याशङ्क्य, भ्रान्तिनिवृत्ति-रेव तत्फलमित्याह अहो मयि इति। अहो आश्चर्यम्, मयि स्थितम् अपि विश्वम्, वस्तुतः, कालत्रयेऽपि, मयि न स्थितम्

सशरीरमिदं विश्वं न किञ्चिदिति निश्चितम् ।
शुद्धचिन्मात्र आत्मा च तत्कस्मिन् कल्पनाधुना॥१९॥
शरीरं स्वर्गनरकौ बन्धमोक्षौ भयं तथा ।
कल्पनामात्रमेवैतत् किं मे कार्यं चिदात्मनः ॥२०॥

---

इति विचारतोऽपि भ्रान्तिः एव शान्ता, न तु परमानन्दावाप्तिर्जनिता, आत्मनः सर्वदा परमानन्दरूपत्वात्, कीदृशी भ्रान्तिः, निराश्रया उक्तविचाराज्ज्ञानस्य नष्टत्वात् निर्मूला इत्यर्थः ॥ १८ ॥

ननु अधिष्ठानस्य उपादानस्य सत्त्वात् मुक्तेष्वपि प्रपञ्चोदयः स्यादित्याशङ्क्याह सशरीरम् इति ।

सशरीरं शरीरसहितम्, इदं विश्वम्, न किञ्चित् सत्यं नापि असत्यम् इति निश्चितम्, "नेह नानास्ति किञ्चन" इति श्रुतेः, आत्मा च चिन्मात्रः शुद्धः मायामलशून्यः, तत् तस्मात् कारणात्, अधुना अज्ञाननिवृत्तौ सत्याम् कस्मिन् अधिष्ठाने, विश्वकल्पना स्यात् न कस्मिन् अपि इत्यर्थः ॥ १९ ॥

ननु सर्वस्य प्रपञ्चस्य अवास्तवत्वे, तदन्तर्गतत्वाच्छरीरमपि अवास्तवमेवेति शरीरविशेषमधिकृत्य प्रवर्त्तमानं विधिनिषेधशास्त्रमपि अवास्तवं स्यात्, तथा च तद्बोधितस्वर्गनरकयोरपि अवास्तवत्वात् स्वर्गादावनुरागो, नरकादिभ्यश्च भयम्, न स्यात्, किं च शास्त्रबोध्यौ बन्धमोक्षावपि वास्तवौ न स्यातामित्याशङ्क्य दृष्टापत्त्या परिहरति शरीरम् इति ।

शरीरादिकमेव एतत् कल्पनामात्रमेव, चिदात्मनः सच्चिदानन्दस्वरूपस्य मम एतैः शरीरादिभिः किं कार्यम्, न किमपि

अहो जनसमूहेऽपि न द्वैतं पश्यतो मम ।
अरण्यमिव संवृत्तं क्व रतिं करवाण्यहम् ॥२१॥
नाहं देहो न मे देहो जीवो नाहमहं हि चित् ।
अयमेव हि मे बन्ध आसीत् या जीविते स्पृहा ॥२२॥

---

कार्यं साध्यम् । विधिनिषेधादिकं तु अविद्यावन्तमेव अधिकृत्य प्रमाणमित्यर्थः ॥ २० ॥

स्वर्गादिभिः किं मे कार्यमिति प्रागुक्तम् । अथ इहलोकेन अपि मे कार्यं नास्ति इत्याह अहो जनसमूह इति ।

न द्वैतं पश्यतो मम अहो इत्याश्चर्यं, जनसमूहेऽपि अरण्यमिव संवृत्तं सञ्जातम् । तस्मात् अहं मिथ्यात्वे क्व रतिं प्रीतिं करवाणि न क्वापि इत्यर्थः ॥ २१ ॥

ननु शरीरस्य अहन्ताममतास्पदतया अनुरागविषयत्वादहङ्कारस्य अपि अहन्तास्पदतया अनुरागविषयत्वात् तत्र स्पृहा स्यादित्याशङ्क्याह नाहम् इति ।

अहं देहो न जडत्वात् न अपि मे देहः, मम निःसङ्गत्वात्, जीवः अहङ्कारो नाहम् । तस्य कर्तृत्वात् आत्मनः अकर्तृत्वात् । कस्तर्हि त्वमित्याशङ्क्याह अहं हि चित् इति चित्स्वरूप एव अहम् इत्यर्थः ।

कुतस्तर्हि विविक्तानामपि जीविते स्पृहा इत्याशङ्क्याह अयमेव हि इति । या जीविते स्पृहा, अयमेव हि मे बन्धः प्राक् आसीत्, जीवनार्थं हि पुमान् सुवर्णहरणादिकमपि करोतीति जीवितेच्छा बन्धः, बन्धहेतुत्वात् इदानीं तु सच्चिदानन्दानुभवशालिनो मम अनङ्गस्य प्राणानुवृत्तिलक्षणे जीवितेऽपि स्पृहा नास्ति इत्यर्थः ॥ २२ ॥

अहो भुवनकल्लोलैर्विचित्रैर्द्राक् समुत्थितम् ।
मय्यनन्तमहाम्भोधौ चित्तवाते समुद्यते ॥२३

मय्यनन्तमहाम्भोधौ चित्तवाते प्रशाम्यति ।
अभाग्यात् जीववणिजो जगत्पोतो विनश्वरः ॥२४

मय्यनन्तमहाम्भोधावाश्चर्य्यं जीववीचयः ।
उद्यन्ति घ्नन्ति खेलन्ति प्रविशन्ति स्वभावतः ॥२५॥

---

अथ स्वस्य सर्वाधिष्ठानत्वं प्रस्तवाह अहो इति ।

अहो आश्चर्य्यं अनन्तमहाम्भोधौ मयि, चित्तवाते समुद्यते समुत्पन्ने सति विचित्रैः नानाविधैः भुवनकल्लोलैः भुवनरूपैस्तरङ्गैः द्राक् अत्यर्थं समुत्थितम् उदयो लब्धः यथा वारिधेस्तरङ्गास्तथा मत्तो भुवनानि वस्तुतो न भिन्नानि इत्यर्थः ॥२३॥

अनन्तमहाम्भोधौ सर्वव्यापकचित्समुद्रे मयि चित्तवाते सङ्कल्पविकल्पशालिनि मनोमारुते प्रशाम्यति सति अहङ्कारादिरहिते सति जीववणिजो जीवात्मलक्षणस्य वाणिज्यस्य कर्त्तुः अभाग्यात् प्रारब्धक्षयात् जगत्पोतः शरीरादिनौकासमूहः विनाशवान् भवति इत्यर्थः ॥ २४ ॥

अथ बाधितानुवृत्त्या स्वस्मिन् सर्वजीवव्यवहारं प्रस्तवाह मयि इति ।

आश्चर्य्यं, निष्क्रिये निर्विकारे मयि अनन्तमहाम्भोधौ जीवा एव वीचयः तरङ्गाः उद्यन्ति अभिव्यक्ता भवन्तीव मिथः परस्परं घ्नन्ति ताडयन्ति इव शत्रुभावाध्यासात् अन्ये च मिथः

अथ शिष्यं प्रति आक्षेपद्वारोपदेशकं नाम तृतीयं प्रकरणम् ।

**अविनाशिनमात्मानमेकं विज्ञाय तत्त्वतः ।**
**तवात्मज्ञस्य धीरस्य कथमर्थार्जने रतिः ॥१॥**

---

भान्ति इव भिन्नभावाध्यासात्, अविद्याकामकर्मरूपे सति च मयि विभान्ति इव कस्मात् स्वभावतः अविद्याकामकर्म-स्वभाववशात् उत्पत्त्यादिकं प्राप्नुवन्ति, स्वभावतः स्वस्य चिद्रू-पस्य अगद्रूपेण स्वभावतः तत्रैव प्रविशन्ति घटाकाशादय इव महाकाशे इति विवेकः ॥ २५ ॥

द्वितीयेऽस्मिन् प्रकरणे शिष्येणानुभवस्थितिः ।
निवेदिता गुरोस्तुष्ट्यै बह्वाश्चर्यपुरःसरा ॥

इति शिष्योक्तात्मानुभवोल्लासपञ्चविंशतिकं नाम
द्वितीयं प्रकरणं समाप्तम् ।

---

शिष्यानुभवपीयूषे भ्रान्तेऽपि कृपयावशात् ।
तद्विज्ञानपरीक्षार्थं शिष्यमाह गुरुः पुनः ॥

विज्ञानानुभवमपि शिष्यस्य व्यवहारस्थितं दृष्ट्वा तद्विज्ञान-परीक्षार्थं तद्व्यवहारे स्थितिमाक्षिप्य आत्मानुभवशालिनीं स्थितिमुपदिशति अविनाशिनम् इति ।

हे शिष्य ! अविनाशिनं निर्विकल्पं त्रैकालिकसत्ताशालिनं कालतो व्यवच्छेदशून्यम् आत्मानं देशतो व्यवच्छेदशून्यम् एकं वस्तुनो व्यवच्छेदशून्यम्, चिद्रूपं विज्ञाय निदिध्यास्य तत्त्वतः आत्मज्ञस्य अतएव धीरस्य तव अर्थार्जने व्यवहारि-कार्थसंग्रहे कथं रतिः प्रीतिरुत्पद्यते इति आक्षेपः ॥ १ ॥

आत्माज्ञानादहो प्रीतिर्विषयभ्रमगोचरे ।
शुक्तेरज्ञानतो लोभो यथा रजतविभ्रमे ॥२॥
विश्वं स्फुरति यत्रेदं तरङ्गा इव सागरे ।
सोऽहमस्मीति विज्ञाय किं दीन इव धावसि ॥३॥

---

ननु ज्ञाने सति विषयसंग्रहः कथमनुपपन्न इत्याशङ्क्य विषयप्रीतेः आत्माज्ञानमूलत्वं सदृष्टान्तं सोपपत्तिकमाह आत्माज्ञानात् इति ।

अहो इति सम्बोधने । हे शिष्य ! विषयभ्रमगोचरे विषये या प्रीतिः सा आत्माज्ञानात् एव भवति न तु ज्ञानात् तद्व्यतिरिक्तविषयाणां बाधादिति भावः ।

अत्र लोकप्रसिद्धं दृष्टान्तमाह शुक्तेः इति । यथा रजतविभ्रमे सति शुक्तेरज्ञानतो लोभः पामराणामपि अनुभवसाक्षिक इत्यर्थः । "विषयभ्रमगोचर" इत्यत्र विशेष्यस्यापि पूर्वनिपातः "विशेषणं विशेष्येण बहुलम्" इत्यत्र बहुलग्रहणादाम्रवृक्षवत् आत्माज्ञानात् इति पदं विषयविभ्रमगोचर इत्यनेनापि सम्बध्यते ॥ २ ॥

अज्ञानमूला विषयप्रीतिरिति प्रागुक्तम्, अथ सर्वाधिष्ठानतया आत्मनि ज्ञाते सति विषयेषु पुनः न प्रीतिः सम्भवति इत्याह विश्वं स्फुरति इति ।

सागरे तरङ्गा इव यथा पृथक् सत्तारहितास्तद्वत् यत्र इदं विश्वं पृथक्सत्तारहितं स्फुरति सः तत्पदार्थो अहमस्मीति विज्ञाय साक्षात्कृत्य दीन इव ममेदं भवतु इति तृष्णाकुल इव किं धावसि कथं धावसि इति आक्षेपः ॥ ३ ॥

श्रुत्वापि शुद्धचैतन्यमात्मानमतिसुन्दरम्।
उपस्थेऽत्यन्तसंसक्तो मालिन्यमधिगच्छति॥४॥
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
मुनेर्जानत आश्चर्यं ममत्वमनुवर्तते॥५॥
आस्थितः परमाद्वैतं मोक्षार्थेऽपि व्यवस्थितः।
आश्चर्यं कामवशगो विकलः केलिशिक्षया॥६॥

---

तदेवं श्लोकत्रयेण ज्ञानिनि शिष्ये दृश्यमानं विषयव्यवहारमाक्षिप्य इदानीं सर्वज्ञानिषु विषयव्यवहारं शिष्यपरीक्षार्थं गुरुराक्षिपति श्रुत्वापि इति।

शुद्धचैतन्यं श्रुत्वापि गुरुमुखात् वेदान्तवाक्यतः साक्षात्कृत्यापि उपस्थे समीपस्थे विषये अत्यन्तसंसक्तः सन् आत्मज्ञः कथं मालिन्यं मौढ्यम्, अधिगच्छति प्राप्नोति अत्र प्रकरणस्य शिष्यजिज्ञासार्थमाक्षेपमुद्रयैव प्रवृत्तत्वात् यत्र आक्षेपवाचकं पदं न दृश्यते तत्र तत् अध्याहर्त्तव्यम्॥ ४ ॥

पुनरपि आश्चर्यमुद्रया आक्षिपति सर्वभूतेषु इति।

सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु आत्मानम् अधिष्ठानभूतं जानतः सर्वभूतानि च आत्मनि रज्जौ भुजङ्गवदध्यस्तानि जानतो मुनेः विषयेषु ममत्वमनुवर्तते इति आश्चर्यम् अध्यस्तं न हि शुक्तिकायामध्यस्तं रजतम् इति जानतश्च ममत्वं सम्भवति इति भावः॥ ५ ॥

आस्थित इति। परमं सजातीयविजातीयस्वगतभेदशून्यम् अद्वैतम् आस्थितः साक्षात् अनुभवन्, तथा मोक्षस्वरूपोऽर्थः सच्चिदानन्दात्मा, तत्र व्यवस्थितः तदेकप्रवणो-

उद्भूतं ज्ञानदुर्मित्रमवधार्यातिदुर्बलः ।
आश्चर्यं काममाकाङ्क्षेत् कालमन्तमनुश्रितः ॥७॥
इहामुत्र विरक्तस्य नित्यानित्यविवेकिनः ।
आश्चर्यं मोक्षकामस्य मोक्षादेव विभीषिका ॥८॥
धीरस्तु भोज्यमानोऽपि पीड्यमानोऽपि सर्वदा ।
आत्मानं केवलं पश्यन् न तुष्यति न कुप्यति ॥९॥

---

ऽपि कामवशगः सन्, केलिशिक्षया नानाक्रीड़ाभ्यासेन विकलो दृश्यते इति आश्चर्यम् ॥ ६ ॥

उद्भूतम् इति । उद्भूतं कामं ज्ञानदुर्मित्रं ज्ञानस्य अत्यन्तवैरिणम् अवधार्य निश्चित्यापि अतिदुर्बलः अतिशयेन बलशून्य इव ज्ञानी, कामं विषयम्, आकाङ्क्षेत् कामं वाञ्छति, इदम् आश्चर्यम्, कीदृशः अन्तं कालमनु समीपे श्रितः, न हि समीपवर्त्तिनि अन्तकाले सति विवेकिनो विषय... युक्तेति भावः ॥ ७ ॥

इहामुत्र विरक्तस्य इति । ऐहिकामुष्मिकभोगविरक्तस्य नित्यम् आत्मतत्त्वम् अनित्यं शरीरादिकम्, तद्विवेकिनः, मोक्षः सच्चिदानन्दस्तत्र कामोऽन्तःकरणं यस्य एवंविधस्य ज्ञानिनोऽपि मोक्षात् एव अमङ्गलतनुधनवियोगात् एव, विभीषिका भयं दृश्यते इति आश्चर्यम् । न हि स्वप्नदृष्टतनुधननाशेऽपि जाग्रतां भयं क्वापि दृष्टम् इति भावः ॥ ८ ॥

एवमाक्षेपमुद्रया पूर्वमुक्तम् । अथ ज्ञानिनस्तोषरोषौ अनुचितौ इति कण्ठतो निरूपयति धीर इति ।

धीरो ज्ञानी लोकैर्विषयान् भोज्यमानोऽपि तथा निन्दा-

चेष्टमानं शरीरं स्वं पश्यत्यन्यशरीरवत्।
संस्तवे चापि निन्दायां कथं क्षुभ्येत् महाशयः ॥१०॥
मायामात्रमिदं विश्वं पश्यन् विगतकौतुकः।
अपि सन्निहिते मृत्यौ कथं त्रस्यति धीरधीः ॥११॥
निःस्पृहं मानसं यस्य नैराश्येऽपि महात्मनः।
तस्यात्मज्ञानतृप्तस्य तुलना केन जायते ॥ १२ ॥

---

दिना पीड्यमानोऽपि सर्वदा आत्मानम् केवलं सुखदुःख-भोगादिरहितं पश्यन् न तुष्यति न कुप्यति। तोषरोष-हेतूनां केवलात्मनि अनध्यवसानात् इति भावः ॥ ८ ॥

किञ्च तोषरोषहेतूनां स्तुतिनिन्दादीनां शरीरधर्मत्वात् शरीरस्य च आत्मभिन्नत्वेनानुसन्धानात्, कथं ज्ञानिनस्तोष-रोषौ इत्याह चेष्टमानम् इति। स्वं शरीरम् आत्माभिन्न-चेष्टाश्रयत्वात् अन्यशरीरवत् इति यः पश्यति स महाशयः संस्तवे स्तुतौ अपि च निन्दायां कथं क्षुभ्येत् कथं तोषरोष-रूपां विक्रियां व्रजेत् इति आक्षेपः ॥ १० ॥

साध्यसाधकयोरनित्यत्वानुसन्धानात् सन्निहितेऽपि मृत्यौ ज्ञानिनः त्रासः कथमित्याह मायामात्रम् इति।

इदं दृश्यमानम्, विश्वं साध्यसाधकादिरूपं समस्तं माया-मात्रम् असद्रूपं पश्यन् अतएव कुत इदं शरीरादिकं जायते, कुत्र विलयं याति एवं रूपकौतुकरहितस्तथा धीरधीः धीरा अचलरूपात् अचला धीर्यस्य सः, सन्निहिते मृत्यौ सति अपि कथं त्रस्यति इति आक्षेपः ॥ ११ ॥

सर्वेषामाक्षेपाणां समर्थनार्थं ज्ञानिनो निरुपमत्वमाह

स्वभावादेव जानानो दृश्यमेतन्न किञ्चन ।
इदं ग्राह्यमिदं त्याज्यं स किं पश्यति धीरधीः ॥१३॥
अन्तस्त्यक्तकषायस्य निर्द्वन्द्वस्य निराशिषः ।
यदृच्छयागतो भोगो न दुःखाय न तुष्टये ॥१४॥

---

अथ शिष्यप्रोक्तानुभवोल्लासनामकं चतुर्थं
प्रकरणं प्रारभ्यते।

हन्तात्मज्ञस्य धीरस्य खेलतो भोगलीलया ।
न हि संसारवाहीकैर्मूढैः सह समानता ॥ १ ॥

---

निःस्पृहम् इति। यस्य नैराश्ये मोक्षे अपि मानसं निःस्पृहम् तस्य आत्मज्ञानतृप्तस्य ब्रह्माहमस्मीति जानतः समासक्तमनोरथस्य केन समं तुलना जायते न केनापि इत्यर्थः ॥ १२ ॥

ज्ञानिनः त्यागोपादानादिव्यवहारमाक्षिपति स्वभावात् एव इति। प्रपञ्चो मिथ्या दृश्यत्वात् शुक्तिकारजतवत् इत्यनुमानात् एतत् दृश्यं न किञ्चन, न सदपि असदिति जानानो निश्चयवान् यो धीरधीः, स इदं ग्राह्यमिदं त्याज्यम् इति कथं पश्यति इति आक्षेपः ॥ १३ ॥

अत्र हेतुमाह अन्तस्त्यक्तकषायस्य इति। अन्तःकरणात् त्यक्ताः कषायाः विषयवासना येन तस्य निर्द्वन्द्वस्य शीतोष्णादिसमचित्तस्य अतएव निराशिषः विषयवासनाविहीनस्य यदृच्छया दैवयोगात् आगतः प्राप्तो भोगः भुज्यमानो विषयो दुःखाय न भवति तुष्टये च न भवति ॥ १४ ॥

आक्षेपद्वारोपदेशकं नाम तृतीयं प्रकरणं समाप्तम्।

**यत्पदं प्रेप्सवो दीनाः शक्राद्याः सर्वदेवताः ।**
**अहो तत्र स्थितो योगी न हर्षमुपगच्छति ॥ २ ॥**

---

गुरुणैवमुपाक्षिप्तः शिष्यो ज्ञानदृढोन्नतम् ।
ज्ञानिन्यशेषचेष्टानां साम्यमाचष्ट षट्कम् ॥

एवं तावद्गुरुणा परीक्षार्थमाक्षिप्तः शिष्यः प्रारब्धवशात् बाधितानुवृत्त्या ज्ञानिन्यपि सर्वव्यवहाराणाम् उपपत्तिम् आत्मज्ञानोल्लासवशात् एव आह षड्भिः श्लोकैः हन्त इति ।

हन्त इति आत्मज्ञानोल्लासेन हर्षे, हे गुरो! आत्मनश्च सर्वाधिष्ठानतया स्वात्मानं जानतः अतएव धीरस्य विषयैः अविक्षिप्तचित्तस्य, भोगलीलया विषयभोगादिरूपया लीलया क्रीडया प्रारब्धवशात् प्रवृत्तया, खेलतः क्रीडतः, संसारवाहीकैः संसारप्रवृत्तिपशुभिः मूढैः देहाद्यात्मवेदिभिः सह न हि समानता नैव तुल्यत्वम् तदुक्तं भगवता "तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः, गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते" ॥ १ ॥

ननु संसारव्यवहारस्थो ज्ञानी, कथं न संसारितुल्य इत्याशङ्क्य हर्षादिरहितत्वात् तस्य वैलक्षण्यमाह यत्पदम् इति

अहो इति सम्बोधनं । हे गुरो! यत्र अहो आश्चर्ये शक्राद्याः सर्वदेवताः अपि, यत्पदं प्रेप्सवः यत्पदं प्राप्तुमिच्छन्तो दीनाः तदप्राप्तितः शोच्याः वर्तन्ते तत्र अविद्यानन्दाख्ये पदे स्थितः तत्त्वम्पदार्थैक्यज्ञानात् तत्र वर्तमानो योगी ब्रह्मसाक्षात्कारी विषयभोगात् न हर्षं प्राप्नोति नापि तदपगमात् उद्विग्नो भवति इत्यर्थः ॥ २ ॥

तज्ज्ञस्य पुण्यपापाभ्यां स्पर्शो ह्यन्तर्न जायते ।
न ह्याकाशस्य धूमेन दृश्यमानापि सङ्गतिः ॥३॥
आत्मैवेदं जगत्सर्वं ज्ञातं येन महात्मना ।
यदृच्छया वर्त्तमानं तं निषेद्धुं क्षमेत कः ॥४॥
आब्रह्मस्तम्बपर्य्यन्ते भूतग्रामे चतुर्विधे ।
विज्ञस्यैव हि सामर्थ्यमिच्छानिच्छाविवर्जने ॥५॥

---

तत्त्वज्ञस्य विध्यकिङ्करत्वं वक्तुं पुण्याद्यसंस्पर्शमाह तज्-ज्ञस्य इति । तत्त्वम्पदार्थैक्याभिज्ञस्य पुण्यपापाभ्यां सह अन्तः-करणधर्माणां स्पर्शः सम्बन्धो न जायते "ज्ञानाग्निः सर्व-कर्माणि भस्मसात् कुरुते तथा" इति स्मृतेः ।

अत्र दृष्टान्तमाह न हि इति, यथा हि आकाशस्य धूमेन सह दृश्यमानापि सङ्गतिः नास्ति । तथा आत्मज्ञस्य पुण्या-दिसङ्गतिरित्यर्थः ॥ ३ ॥

ननु कर्मणि कृते कथं न पुण्यादिस्पर्श इत्याशङ्क्य ज्ञानिनो विधिनिषेधानियम्यत्वमाह आत्मैव इति ।

येन महात्मना इदं दृश्यमानं सर्वं जगत्, आत्मैव इति ज्ञातं तं ज्ञानिनं यदृच्छया प्रारब्धवशात् एव वर्त्तमानं को वा अ:-कलापो निषेद्धुं प्रवर्त्तयितुं वा क्षमेत समर्थो भवेत् न कोऽपि इत्यर्थः । तदुक्तं शारीरकभाष्ये "अविद्यावद्विषयो वेदः इति । "प्रबोधनीय एवासौ सुप्तो राजेव बन्दिभिः" इति स्मृतिरपि ॥४॥

ननु ज्ञानिनोऽपि न यदृच्छया प्रवर्त्तन्ते किन्तु इच्छानि-च्छयोर्निवर्त्तयितुमशक्यत्वात् इत्याशङ्क्याह आब्रह्मस्तम्बपर्य्यन्त इति । यद्यपि ब्रह्माणमारभ्य स्तम्बपर्य्यन्ते इच्छानिच्छे

आत्मानमद्वयं कश्चिज्जानाति जगदीश्वरम्।
यद्वेत्ति तत् स कुरुते न भयं तस्य कुत्रचित्॥६॥

---

अथ आचार्य्योक्तं लयचतुष्टयं नाम पञ्चमं प्रकरणम्।

न ते सङ्गोऽस्ति केनापि किं शुद्धस्त्यक्तुमिच्छसि।
सङ्घातविलयं कुर्वन्नेवमेव लयं व्रज॥१॥

---

विवर्जयितुमशक्ते तथापि विमुक्तस्येव स्वेच्छादेवनिवर्त्तने सामर्थ्य-मतो यदृच्छया प्रवर्त्तमानो ज्ञानी न विधिनिषेधनियम्य इत्यर्थः॥५॥

अद्वैतज्ञानेन द्वितीयस्य बाधितत्वात् ज्ञानिनां भयहेतुः कोऽपि नास्ति इत्युपसंहरति आत्मानम् इति।

कश्चित् सहस्रेषु एक एव जगदीश्वरं तत्पदार्थम् आत्मानम् त्वम्पदार्थम् अद्वयम् अभिन्नतया जानाति स यद्वेत्ति प्रारब्ध-वशात् बाधितानुवृत्त्या इदं कर्त्तव्यमिति मन्यते तत् करोति एवं कुर्वतः तस्य कुत्रचित् इह वा अमुत्र वा भयं न अस्ति भयहेतोः अद्वैतज्ञानबाधितत्वात् इति भावः॥६॥

इति शिष्यप्रोक्तानुभवोल्लासषट्कं नाम चतुर्थं
प्रकरणं समाप्तम्।

---

एवमुल्लासषट्केन शिष्येऽपि परीक्षिते।
गुरुर्दृढोपदेशार्थं लययोगमथाब्रवीत्॥

एवमुल्लासषट्केन शिष्ये परीक्षिते सति पुनर्दृढोप-देशार्थमाचार्य्यो लयमुपदिशति। [illegible]

उदेति भवतो विश्वं वारिधेरिव बुद्बुदः ।
इति ज्ञात्वैकमात्मानमेवमेव लयं व्रज ॥२॥
प्रत्यक्षमप्यवस्तुत्वाद्विश्वं नास्त्यमले त्वयि ।
रज्जुसर्प इव व्यक्तमेवमेव लयं व्रज ॥३॥
समदुःखसुखः पूर्ण आशानैराश्ययोः समः ।
समजीवितमृत्युः सन्नेवमेव लयं व्रज ॥४॥

---

हे शिष्य ! शुद्धबुद्धस्वभावस्य तव केनापि देहगेहादिनाऽहङ्कारममकारास्पदेन न सङ्गोऽस्ति, अतः शुद्धः असङ्गस्त्वम्, किं त्यक्तुं किमुपादातुं च इच्छसि तस्मात् सङ्घातस्य देहस्य विलयं कुर्वन् अहं देहोति निरसनं कुर्वन् । देहादिनिरसनरूपम् एव लयं व्रज ॥ १ ॥

उदेति इति । हे शिष्य ! भवतः सकाशात् विश्वम् उदेति भवदभिन्नमेव, यथा वारिधेः सकाशात् बुद्बुदो वारिधेरभिन्न एव उदेति, इति एवम्प्रकारेण एकं सजातीयादिभेदरहितम् आत्मानं ज्ञात्वा एवमेव एकात्मज्ञानमेव लयं व्रज ॥ २ ॥

ननु प्रत्यक्षतो भिन्नतया हारसर्पादिभेदे प्रतीयमाने कथं हारादिविलय इत्यत आह प्रत्यक्षम् इति ।

प्रत्यक्षमपि व्यक्तं इदं विश्वम् अमले त्वयि नास्ति, एव अवस्तुत्वात् रज्जुसर्पवत् तस्मात् एवमेव लयं व्रज द्वितीयस्य हेयोपादेयस्यैव अभावादित्यर्थः ॥ ३ ॥

समदुःखसुख इति । पूर्णं आत्मानन्दपूर्णस्त्वमत एव दैव-वशादुद्भूतयोः सुखदुःखयोः समः आशानैराश्ययोश्च समः ।

अथ शिष्योक्तमुत्तरचतुष्कं नाम षष्ठं प्रकरणम्।

आकाशवदनन्तोऽहं घटवत् प्राकृतं जगत्।
इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयः॥१॥

---

तथा जीविते मृत्यौ वा समः निर्विकारः सुखदुःखादीनामनात्मधर्माणां तुच्छत्वानुसन्धानात् त्वं सुखदुःखादिषु समः, ब्रह्मदृष्टिरूपं लयं व्रज इत्यर्थः ४॥

इति आचार्योक्तं लयचतुष्टयं नाम पञ्चमं
प्रकरणं समाप्तम्।

---

गुरुणैवं परीक्षार्थमुपदिष्टे लये सति।
पूर्णात्मनो लयादीनां शिष्योऽसम्भवमब्रवीत्॥

तदेवं गुरुणा अत्यन्तपरीक्षार्थं लययोगे समुपदिष्टे सति लयाद्यभावोपपादकमात्मज्ञानमनुवदन्नेव शिष्यः पूर्णात्मनो लयाद्यसम्भवमाह चतुर्भिः श्लोकैः आकाशवत् इति।

अहम् आत्मा आकाशवत् अनन्तः। ननु अनन्तस्यात्मनो देहादिनिवासः कथमित्यत आह घटवत् इति। प्राकृतं प्रकृतिकार्यं जगत् देहादिकं घटवत् यथा घट आकाशस्य अवच्छेदको निवासस्थानं च तथा आत्मनो देहादिरूप-देहावच्छेदक एव लोक इव घटादिरित्यर्थः।

अत्र प्रमाणमाह इति इति। इति एवं वेदान्तसिद्धं ज्ञानम् अनुभवरूपमस्य प्रमाणमतो न अन्यथाभावशङ्केत्यर्थः।

तथा इति तथा इति आत्मनोऽनन्तत्वे सति एतस्य आत्मनः त्यागो ग्रहणं लयः च न सम्भवति। परिच्छिन्नस्यैव घटादेस्त्यागादिदर्शनात् इत्यर्थः॥१॥

महोदधिरिवाहं स प्रपञ्चो वीचिसन्निभः ।
इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयः ॥ २ ॥
अहं स शुक्तिसङ्काशो रूप्यवद्विश्वकल्पना ।
इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयः ॥३॥
अहं वा सर्वभूतेषु सर्वभूतान्यथो मयि ।
इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयः ॥४॥

---

अथ अनुभवपञ्चकं नाम सप्तमं प्रकरणं प्रारभ्यते ।

मय्यनन्तमहाम्भोधौ विश्वपोत इतस्ततः ।
भ्रमति स्वान्तवातेन न ममास्त्यसहिष्णुता ॥१॥

---

घटाकाशदृष्टान्ते देहात्मनोर्भेदशङ्का स्यात् इति अपरितोषात् आह महोदधिः इति ।

महोदधिः इति स्पष्टम् ॥ २ ॥

समुद्रवीचिदृष्टान्ते देहात्मनोर्विकारविकारिशङ्का स्यात् इति अपरितोषात् आह अहं सः इति ।

स्पष्टम् ॥ ३ ॥

शुक्तिदृष्टान्तेऽपि आत्मनि परिच्छिन्नत्वशङ्का स्यात् तद्व्यावृत्त्यर्थमाह अहम् इति । अहं वा अहमेव सर्वभूतेषु प्रकृतिप्राकृतिकेषु सत्तास्फूर्त्यादिप्रदत्वेनास्मि अत अतो हेतोः सर्वभूतानि अधिष्ठानभूते मयि वर्त्तन्ते इति ज्ञानं वेदान्तसिद्धम् । तथा सति आत्मनस्त्यागादिकं न सम्भवतीत्यर्थः ॥४॥

इति [illegible]चतुष्कं नाम षष्ठं प्रकरणं समाप्तम् ।

मय्यनन्तमहाम्भोधौ जगद्वीचिः स्वभावतः।
उदेतु वास्तमायातु न मे वृद्धिर्न च क्षतिः॥ २॥
मय्यनन्तमहाम्भोधौ विश्वं नाम विकल्पना।
अतिशान्तो निराकार एतदेवाहमास्थितः॥ ३॥

---

लययोगाननुष्ठाने व्यवहारं निरङ्कुशम्।
आशङ्क्य शिष्यः स्वोल्लासादब्रवीद्गुरुमुत्तरम्॥

ननु लययोगाभावे संसारविक्षेपो निरङ्कुशप्रसरः स्यात् इत्याशङ्क्य तस्य अनिष्टत्वाभावमनुभवपञ्चकेनोत्तरमाह शिष्यः।

मयि इति। हे गुरो! मयि आत्मनि अनन्ते महासमुद्रे विश्वाख्यः पोतो नौका स्वान्तवातेन मनःपवनेन इतस्ततो भ्रमति, अत्र मम असहिष्णुता असहनशीलता न अस्ति समुद्रस्येव नौकापरिभ्रमणे इत्यर्थः॥ १॥

जगद्व्यवहारस्यानिष्टत्वाभाव पूर्वमुक्तः। अथ जगदुद-यापगमयोरपि नानिष्टतेत्याह मयि इति।

आत्मनि अनन्ते विनाशरहिते महति व्यापके अम्भोधौ समुद्रे जगदाख्या वीचिः स्वभावतः दृश्यत्वादिस्वभावात् उदेतु वा परम् अस्तमायातु मम तदुदये वृद्धिर्न अस्ति व्यापकत्वात् तदपगमे च क्षतिर्न अस्ति अनन्तत्वादित्यर्थः॥ २॥

पूर्वं दृष्टान्तेन स्वात्मनः अनधिकार इति भ्रमपरिणामित्वं स्यात् तद्वारणायेदमाह मयि इति।

मयि अनन्तमहाम्भोधौ नाम प्रसिद्धं विश्वं कल्पना भ्रम-मात्रमेव न तु तात्त्विकम्। अतःकारणात् अहम् अतिशान्तः प्रपञ्चोपप्लवरहितः।

न समाधिं न विक्षेपं न लेपं स्वस्य पश्यति ॥१८॥
भावाभावविहीनो यस्तृप्तो निर्वासनो बुधः ।
नैव किञ्चित् कृतं तेन लोकदृष्ट्या विकुर्वता ॥१९॥
प्रवृत्तौ वा निवृत्तौ वा नैव धीरस्य दुर्ग्रहः ।
यदा यत्कर्त्तुमायाति तत्कृत्वा तिष्ठतः सुखम् ॥२०॥
निर्वासनो निरालम्बः स्वच्छन्दो मुक्तबन्धनः ।

---

इदमेव विवृणोति धीर इति । धीरः स्वकीयात्म-विश्रान्तः लोकविपर्य्यस्तः लोकेषु विक्षेपरहितः स्ववशात् लोकवद्वर्त्तमानोऽपि बाधितानुवृत्त्या व्यवहारपरोऽपि स्वयं समाधिः अयं विक्षेपः तथा अयं विक्षेपकृतो लेप आत्मन इत्यादिकं न पश्यति । चिन्मात्रदर्शित्वात् । १८

भावाभाव इति । यो बुधस्तृप्तः स्वात्मानुभवतृप्तोऽत एव भावाभावविकारस्फूर्त्तिविहीनः, अत एव निर्वासनः, तेन लोकदृष्ट्या कुर्वतापि किञ्चित् अपि नैव कृतं स्यात् । अकर्त्तात्मज्ञानेन कर्त्तृत्वाध्यासबाधादित्यर्थः ॥ १९ ॥

इदमेव विशदयति प्रवृत्तौ वा इति । धीरस्य आत्म-विश्रान्तस्य प्रवृत्तौ वा निवृत्तौ वा, दुर्ग्रहः दुराग्रहः कर्त्तृ-त्वाभिमानो न अस्ति कोऽप्यस्य धीरस्य, प्रारब्धवशात् यदा यत् प्रवृत्तं वा निवृत्तं वा कर्त्तुमायाति, तत्सुखम् अनायासं यथा स्यात्तथा कृत्वा तिष्ठतः, अतः कर्त्तृत्वाभिमानाभाव-ज्ञानिनां कृतमकृतम् एव इत्यर्थः ॥ २० ॥

ननु ज्ञानी चेत् निर्वासनस्तर्हि केन प्रयुक्तः कर्म करोति इत्याशङ्क्याह निर्वासन इति । निर्वासनः अत एव निरालम्बः

छिन्नः संस्कारवातेन चेष्टते शुष्कपर्णवत् ॥ २१ ॥
असंसारस्य तु क्वापि न हर्षो न विषादता।
स शीतलमना नित्यं विदेह इव राजते ॥ २२ ॥
कुत्रापि न जिहासास्ति नाशो वापि न कुत्रचित्।
आत्मारामस्य धीरस्य शीतलाच्छतरात्मनः ॥ २३ ॥
प्रकृत्या शून्यचित्तस्य कुर्वतोऽस्य यदृच्छया।
प्राकृतस्येव धीरस्य न मानो नावमानता ॥ २४ ॥

---

कर्तव्यानुसन्धानरहितः, अत एव स्वच्छन्दः रागद्वेषानधीनः। अतो मुक्तबन्धनः बन्धहेतुत्वज्ञानशून्यः ज्ञानी, संस्कारवातेन छिन्नः प्रारब्धपवनेन प्रेरितः सन्, शुष्कपर्णवत् विचेष्टते ॥ २१ ॥

संसारसङ्कल्पादिशून्यस्तु सर्वदा सन्तुष्ट एवेत्याह असंसारस्य इति। न विद्यते संसारस्य हेतुः सङ्कल्पो यस्य तस्य असंसारस्य हर्षादिका ऊर्मयो न जायन्ते, अतएव ऊर्मिरहितत्वात् नित्यं शीतलमना विदेहमुक्त इव राजते "षडूर्मिरहितः शिवः" इति स्मृतेः ॥ २२ ॥

कुत्रापि इति। आत्मारामस्य, अतएव धीरस्य निश्चल-चित्तस्य, अतएव शीतलः अच्छतरः निर्मलतरः आत्मा मनो यस्य तस्य शीतलाच्छतरात्मनः ज्ञानिनः कुत्रापि जिहासा त्यागेच्छा नास्ति, उपादित्सापि नास्ति, रागद्वेषाभावात् नाशोऽपि अनर्थोऽपि कुत्रचित् न अस्ति, अनर्थहेतोरज्ञान-स्याभावादित्यर्थः ॥ २३ ॥

प्रकृत्या इति। प्रकृत्या स्वभावेन, शून्यं विकाररहितं चित्तं यस्य तस्य धीरस्य आत्मविज्ञानवतः प्राकृतस्येव अज्ञानिन

कृतं देहेन कर्मेदं न मया शुद्धरूपिणा ।
इति चिन्तानुरोधी यः कुर्वन्नपि करोति न ॥२५॥
अतद्वादीव कुरुते न भवेदपि बालिशः ।
जीवन्मुक्तः सुखी श्रीमान् संसरन्नपि शोभते ॥२६॥
नानाविचारसुश्रान्तो धीरो विश्रान्तिमागतः ।
न कल्पते न जानाति न शृणोति न पश्यति ॥२७
असमाधेरविक्षेपान्न मुमुक्षुर्न चेतरः ।

---

इव, यदृच्छया प्रारब्धवशात्, कुर्वतोऽस्य विदुषः समानापमानानुसन्धानं नास्ति इत्यर्थः ॥ २४ ॥

कृतं देहेन इति । इति चिन्तामनुरोध्यते निरन्तरं स्मरति यः स कुर्वन्नपि न करोति, कर्तृत्वाभिमानाभावादित्यर्थः ॥२५॥

अतद्वादीव इति । जीवन्मुक्तः अतद्वादीव अहमिदं करिष्यामि इति अवदन्नेव कार्यं कुरुते, प्रारब्धवशादवदन् अपि बालिशो मूर्खो न भवेत् अन्तर्ज्ञानित्वात्, अतएव संसरन्नपि संसारव्यवहारं कुर्वन्नपि अन्तः सुखी अतएव श्रीमान् प्रसन्नतया शोभावान्, अतएव शोभते दीप्यते स्वप्रकाश इत्यर्थः ॥६॥

नाना इति । नानाविचारात् द्वैतविचारात्, सुश्रान्तः इव निवृत्तो यतो धीरो ज्ञानी, अतएव आत्मन्येव विश्रान्तिमागतः, अतएव न कल्पते, सङ्कल्पादिकं मनोव्यापारं न करोति न जानाति बुद्धिव्यापारं न करोति, शब्दं न शृणोति, रूपं न पश्यति, इन्द्रियमात्रव्यापारं न करोति कर्तृत्वाभिमानाभावात् इत्यर्थः ॥ २७ ॥

असमाधेः इति । ज्ञानी मुमुक्षुः न भवति, असमाधेः

निश्चित्य कल्पितं पश्यन् ब्रह्मैवास्ते महाशयः २८

यस्यान्तः स्यादहङ्कारो न करोति करोति सः ।
निरहङ्कारधीरेण न किञ्चिदकृतं कृतम् ॥ २९ ॥

नोद्विग्नं न च सन्तुष्टमकर्तृ स्पन्दवर्जितम् ।
निराशं गतसन्देहं चित्तं मुक्तस्य राजते ॥ ३० ॥

निर्ध्यातुं चेष्टितुं वापि यच्चित्तं न प्रवर्तते ।

---

समाधेरकरणात् तथा इतरो बद्धो न भवति, अविक्षेपात् द्वैतभ्रमाभावात् इत्यर्थः । कोऽहमस्तीति ज्ञानोत्थापकत्वाच्च निश्चित्य इति । इदं सर्वं कल्पितम् इति पूर्वमेव निश्चित्य, पश्चात् बाधितानुवृत्त्या पश्यन् अपि महाशयः निर्विकारचित्तः, अतएव ब्रह्मैवास्ते ॥ २८ ॥

ननु संसारं पश्यन्नेव कथं ब्रह्मेत्याशङ्क्य अहङ्काराभावात् इत्याह यस्य इति । यस्यान्तःकरणे अहङ्काराध्यासः स्यात् । सः लोकदृष्ट्या न कुर्वन्नपि सङ्कल्पादिकं करोति कर्तृत्वाध्यासात् । निरहङ्कारेण अतएव धीरेण कर्तृत्वाध्यासरहितेन, यद्यपि लोकदृष्ट्या अकृतं, तथापि स्वदृष्ट्या न किञ्चित् अपि कृतं कर्तृत्वाध्यासाभावादित्यर्थः । "यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते" इति स्मृतेः ॥ २९ ॥

मुक्तचित्तं वर्णयति द्वाभ्यां नोद्विग्नम् इति । मुक्तस्य चित्तं राजते केवलप्रकाशरूपमेव यतो नोद्विग्नम् उद्वेगहेतोर्द्वैतस्याभावात् । न च सन्तुष्टं सन्तोषहेतोरनुरागाभावात् । तथा अकर्तृ स्पन्दवर्जितं सङ्कल्पविकल्पशून्यमत एव निराशम्, गतःसन्देहो यस्मात् तत् गतसन्देहं सन्देहहेतोरज्ञानस्य नष्टत्वात् इत्यर्थः ॥ ३० ॥

निर्निमित्तमिदं किन्तु निर्ध्यायति विचेष्टते ॥३१॥
तत्त्वं यथार्थमाकर्ण्य मन्दः प्राप्नोति मूढताम् ।
अथवायाति सङ्कोचममूढः कोऽपि मूढवत् ॥३२॥
एकाग्रता निरोधो वा मूढैरभ्यस्यते भृशम् ।
धीराः कृत्यं न पश्यन्ति सुप्तवत् स्वपदे स्थिताः ३३

---

निर्ध्यातुम् इति । यस्य ज्ञानिनः चित्तं निर्ध्यातुं निःक्रियत्वेन स्थातुं चेष्टितुं चेष्टां सङ्कल्पादिरूपां कर्त्तुं वापि न प्रवर्त्तते न सङ्कल्पयति । किन्तु इदं ज्ञानिनश्चित्तं निर्निमित्तं सङ्कल्परहितमेव सत् निर्ध्यायति निश्चलं स्वरूपे तिष्ठति चेष्टति । तथा विचेष्टते विविधां चेष्टां करोति इत्यर्थः ॥ ३१ ॥

अज्ञानिनो निर्विशेषं वदन्नेव ज्ञानिनो विरलत्वमाह तत्त्वम् इति । मन्दः अज्ञानी यथार्थं तत्त्वं तत्त्वम्पदार्थभेदम्, श्रुतेः आकर्ण्य असम्भावनाविपरीतभावनाभ्यां मूढताम् अविवेकं प्राप्नोति । अथवा शास्त्रार्थसाक्षात्काराय सङ्कोचं चित्तसमाधिम् आयाति कोऽपि सहस्रेष्वेकः अतः असम्मूढोऽपि बाह्यगत्या मूढवत् बहिर्व्यवहारकर्त्ता भवति ॥ १२ ॥

"अथवायाति सङ्कोचम्" इत्यनेनोक्तौ एकाग्रतानिरोधौ दूषयति एकाग्रता इति । एकाग्रता एकमेव अग्रं ध्येयं यस्य तदेकाग्रम् । एकाग्रस्य भाव एकाग्रता वा एकाग्रता एकविषयनिष्ठचित्तता । अथ वा निरोधः चित्तविलयो मूढैः अनुत्पन्नात्मसाक्षात्कारैः विपरीतभावनानिवृत्त्यर्थे भृशम् अत्यर्थम्, अभ्यस्यते सुप्तवत् सुषुप्तवत् देहाद्यभिमानरहितत्वेन स्वपदे स्वरूपे स्थिता धीरा विज्ञानिनस्तु प्राप्तुं किमपि कृत्यं न पश्यन्ति

अप्रयत्नात् प्रयत्नाद्वा मूढो नाप्नोति निर्वृतिम् ।
तत्त्वनिश्चयमात्रेण प्राज्ञो भवति निर्वृतः ॥३४॥
शुद्धं बुद्धं प्रियं पूर्णं निष्प्रपञ्चं निरामयम् ।
आत्मानं तं न जानन्ति तत्राभ्यासपरा जनाः ॥३५॥
नाप्नोति कर्मणा मोक्षं विमूढोऽभ्यासरूपिणा ।
धन्यो विज्ञानमात्रेण मुक्तस्तिष्ठत्यविक्रियः ॥३६॥

---

अद्वैतानन्दात्मसाक्षात्कारेणैव आनन्दादिभ्रमस्य दुरापास्तत्वादित्यर्थः ॥ ३३ ॥

निरोधस्य अकिञ्चित्करतामाह अप्रयत्नात् इति । मूढः पुरुषः मूढो ब्रह्मात्मैकनिश्चयशून्यः, अप्रयत्नात् चित्तनिरोधात् प्रयत्नात् कर्मानुष्ठानात् वा निर्वृतिं परमं सुखं न प्राप्नोति । आनन्दहेतोरात्मानन्दानुभवाभावादित्यर्थः । प्राज्ञः तु समाधिं वाक्कर्म वापि अकुर्वन् । तत्त्वनिश्चयमात्रेण ज्ञातार्थो भवति दुःखहेतोरज्ञानस्य ज्ञानेन दग्धत्वादित्यर्थः ॥ ३४ ॥

ननु मूढस्य योगाभ्यासादात्मानुभवो भविष्यतीत्याशङ्क्य न इत्याह शुद्धम् इति । तत्र जगति अभ्यासपरा जनाः अज्ञानिनः आत्मानं तं न जानन्ति । कीदृशं शुद्धं मायामलातीतम् अतएव बुद्धं स्वप्रकाशम् । प्रियं सुखरूपं पूर्णं यतो निष्प्रपञ्चम् अतएव निरामयं दुःखसम्बन्धरहितमित्यर्थः ॥ ३५ ॥

इदमेव विवृणोति नाप्नोति इति । विमूढः अनात्मज्ञः, अभ्यासरूपिणा योगाभ्यासात्मकेन कर्मणा मोक्षं नाप्नोति । "कर्मणा न प्रजया न धनेन" इति श्रुतेः । धन्यो भाग्यवान् विरक्तो विज्ञानमात्रेण अविक्रियो निरस्ताविद्याकामकर्मा, अतएव मुक्तस्तिष्ठति ॥ ३६ ॥

मूढ़ो नाप्नोति तद्ब्रह्म यतो भवितुमिच्छति ।
अनिच्छन्नपि धीरो हि परब्रह्मस्वरूपभाक् ॥३७॥
निराधारा ग्रहव्यग्रा: मूढ़ा: संसारपोषका: ।
एतस्यानर्थमूलस्य मूलच्छेद: कृतो बुधै: ॥ ३८ ॥
न शान्तिं लभते मूढो यत: शमितुमिच्छति ।
धीरस्तत्त्वं विनिश्चित्य सर्वदा शान्तमानस: ॥३९॥
क्वात्मनो दर्शनं तस्य यद्दृष्टमवलम्बते ।

---

मुमुक्षुरपि मूढ़ो ब्रह्म नाप्नोतीत्याह मूढ़ इति । मूढ़: अज्ञानी, यत: चित्तनिरोधात् एव ब्रह्म भवितुमिच्छति । ततो ब्रह्म नाप्नोति, हि निश्चितं धीरो ज्ञानी मोक्षम् अनिच्छन्नपि परब्रह्मस्वरूपभाक् व्यवधानस्य निवृत्तत्वादित्यर्थ: ॥३७॥

एतदेव स्पष्टयति निराधारा इति । मूढ़ा: अज्ञानिन:, निराधारा ग्रहव्यग्रा: केवलेन चित्तनिरोधेनैवाहं मोक्ष्यामीति निष्कारणदुराग्रहव्यग्रा: प्रत्युत संसारपोषका: संसारनिवर्तकज्ञानपराङ्मुखत्वात् । बुधै: ज्ञानिभि: अनर्थमूलस्य एतस्य संसारस्य मूलच्छेद: कृत: संसारमूलभूताज्ञानस्य ज्ञानेन निवृत्तत्वादित्यर्थ: ॥ ३८ ॥

किञ्च न शान्तिम् इति । मूढ़ अज्ञानी यत: निरोधादे:, शमितुमिच्छति । न तत: शान्तिं लभते, धीरो विवेकी तत्त्वं विनिश्चित्य शमितुमनिच्छन्नपि स्वभावात् एव सर्वदा शान्तमानसो भवति । चेतोविकारहेतोरज्ञानस्य निवृत्तत्वादित्यर्थ: ॥ ३९ ॥

किञ्च क्वात्मन: इति । यद्दृष्टं यस्य दृष्टं ज्ञातम् अवलम्बते

धीरास्तं तं न पश्यन्ति पश्यन्त्यात्मानमव्ययम् ४०

क्व निरोधो विमूढस्य यो निर्बन्धं करोति वै।
स्वारामस्यैव धीरस्य सर्वदाऽसावकृत्रिमः ॥ ४१ ॥

भावस्य भावकः कश्चिन्न किञ्चिद्भावकोऽपरः।
उभयाभावकः कश्चिदेवमेव निराकुलः ॥ ४२ ॥

शुद्धमद्वयमात्मानं भावयन्ति कुबुद्धयः।

---

दृश्यं विषयीकरोति। तस्यात्मनो दर्शनं क्व, न क्वापि इत्यर्थः। धीराः ज्ञानिनः तं तं तिमिरप्रदीपादिकं दृश्यपदार्थं न पश्यन्ति, किन्तु चिद्रूपम् आत्मानं पश्यन्ति ॥ ४० ॥

क्व इति। यः अज्ञानी मुग्धः चित्तनिरोधे निर्बन्धं करोति। तस्य विमूढस्य क्व चित्तनिरोधः, न क्वापि, अज्ञानिनां समाध्युपरमे पुनश्चित्तप्रसारात्, स्वारामस्यैव आत्मारामस्य अतएव निश्चलचित्तस्य सर्वदाऽसौ चित्तनिरोधः अकृत्रिमः स्वाभाविकः सर्वदा आत्मानुभवशालित्वात् ॥ ४१ ॥

भावस्य इति। कश्चित् तार्किकादिः भावस्य भावकः भावरूपं परमार्थतः सन् प्रपञ्च इति भावयति मन्यते इति भावस्य भावकः, अपरः शून्यवादी बौद्धः न किञ्चिदस्तीति विभावयतीति न किञ्चिद्भावकः। कश्चित् सहस्रेषु एव कश्चिदात्मानुभवशाली, उभयाभावकः सन् एव उभयाभावेन एव निराकुलः स्वस्थचित्त आस्ते इत्यर्थः ॥ ४२ ॥

"न किञ्चिदपि चिन्तयेत्" इति भगवद्वचनम्, चिदात्मानमभिप्रेत्याह शुद्धम् इति। कुबुद्धयः मूढबुद्धय एव शुद्धं निर्मलम् अद्वयं द्वैतवर्जितम्, आत्मानम् अतनमयीं व्यापकं भावयन्ति

न तु जानन्ति संमोहाद्यावज्जीवमनिर्वृताः ॥४३॥
मुमुक्षोर्बुद्धिरालम्बमन्तरेण न विद्यते ।
निरालम्बैव निष्कामा बुद्धिर्मुक्तस्य सर्वदा ॥४४॥
विषयद्वीपिनो वीक्ष्य चकिताः शरणार्थिनः ।
विशन्ति झटिति क्रोड़ं निरोधैकाग्रसिद्धये ॥४५॥
निर्वासनं हरिं दृष्ट्वा तूष्णीं विषयदन्तिनः ।

---

चिन्तयन्ति, न तु जानन्ति साक्षात्कुर्वन्ति कुतः, सम्मोहात् निर्मलत्वस्य कल्पितमलसापेक्षत्वात् अद्वयस्य कल्पितद्वैत-सापेक्षत्वात् आत्मत्वस्य च कल्पितानात्मसापेक्षत्वात् सापेक्ष-रूपचिन्तनेन तु मोहानिवृत्तेः यतो न जानन्ति, अतएव यावज्जीवमनिवृताः परमसन्तोषरहिताः सन्तोषस्य ज्ञानैक-लभ्यत्वादित्यर्थः ॥ ४३ ॥

इदमेव विशदयति मुमुक्षोः इति। मुमुक्षोः अनधि-गतात्मसाक्षात्कारस्य बुद्धिः, सविशेषालम्बनम् अन्तरेण न विद्यते साक्षात्काराभावात् मुक्तस्य जीवन्मुक्तस्य, अतएव मुक्तावपि निष्कामा बुद्धिः, सर्वदा निरालम्बैव निर्विशेषा-त्मानुभवरूपैव, सविशेषादिपरित्याग एवात्मानुभवः ॥ ४४ ॥

निरोधोऽपि विषयस्फूर्त्तिचकितैरेवानुष्ठीयते न तु विशे-षज्ञैरित्याह विषय इति। विषयद्वीपिनो विषयव्याघ्रान् वीक्ष्य "शार्दूलद्वीपिनो व्याघ्रे" इत्यमरः भीताः शरणार्थिनः त्राणरक्षणार्थिनो, मूढ़ा एव निरोधसिद्धये एकाग्रवृत्ति-सिद्धये वा, झटिति शीघ्रं, क्रोड़ं कन्दरान्तःप्रदेशं, विशन्ति न तु ज्ञानिन इत्यर्थः ॥ ४५ ॥

वासनात्याग एव विषयभयनिवृत्तिरित्याह निर्वासनमिति।

पलायन्ते न शक्तास्ते सेवन्ते कृतचाटवः ॥ ४६ ॥
न मुक्तिकारिकां धत्ते निःशङ्को युक्तमानसः ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन्नास्ते यथासुखम् ॥४७
वस्तुश्रवणमात्रेण शुद्धबुद्धिर्निराकुलः ।
नैवाचारमनाचारमौदास्यं वा प्रपश्यति ॥ ४८ ॥
यदा यत् कर्तुमायाति तदा तत् कुरुते ऋजुः ।
शुभं वाप्यशुभं वापि तस्य चेष्टा हि बालवत् ॥४९

---

निर्वासनो यः पुरुषस्तद्रूपं, हरिं सिंहं दृष्ट्वा विषयदन्तिनो न शक्ताः सन्तः तूष्णीं मौनं यथा स्यात्तथा पलायन्ते कृतचाटवः कृतप्रियवचना इव तं निर्वासनम् ईश्वराज्ञया: अथ-मागत्य सेवन्त इत्यर्थः ॥ ४६ ॥

न मुक्तिकारिकामिति । निःशङ्को गतसंशयः अत एव युक्तमानसो निश्चलमानसः ज्ञानी मुक्तिकारिकां यमनियमादिक्रियामाग्रहात् न धत्ते किं तर्हि कर्तृत्वाध्यासरहितत्वात् यथासुखम् प्रारब्धसुखमनतिक्रम्य, लोकदृष्ट्या ईक्षणादिक्रियां कुर्वन् आस्ते इत्यर्थः ॥ ४७ ॥

वस्त्विति । वस्तुनश्चिदात्मनः श्रवणमात्रेण जाता वा शुद्धबुद्धिः चिदात्मसाक्षात्कारस्ततो निराकुलः अचञ्चलः पुरुषः, आचारं क्रियानुष्ठानम् अनाचारम् अशुभं कर्म वा, औदास्यं नैष्कर्म्यम् उभयत्रापि ताटस्थ्यं वा एतत्त्रयमपि नैव प्रपश्यति आत्मरूपत्वादित्यर्थः ॥ ४८ ॥

यदेति । यदा यत् शुभं नैष्कर्म्यं वा अशुभं कर्म वा, कर्तुमायाति तत् लोकदृष्ट्या प्रारब्धवशात् कुरुते, ऋजुः

स्वातन्त्र्यात् सुखमाप्नोति स्वातन्त्र्याल्लभते परम्।
स्वातन्त्र्यान्निर्वृतिं गच्छेत् स्वातन्त्र्यात् परमं पदम्॥५०॥
अकर्तृत्वमभोक्तृत्वं स्वात्मनो मन्यते यदा।
तदा क्षीणा भवन्त्येव समस्ताश्चित्तवृत्तयः॥५१॥
उच्छृङ्खलाप्यकृतिका स्थितिर्धीरस्य राजते।
न तु सस्पृहचित्तस्य शान्तिर्मूढस्य कृत्रिमा॥५२॥
विलसन्ति महाभोगैर्विशन्ति गिरिगह्वरान्।

---

आग्रहरहितः, हि यतः कारणात् तस्य चेष्टा बालवत् प्रारब्धमात्रायत्ता न रागद्वेषाधीना॥४९॥

स्वातन्त्र्यात् इति। स्वातन्त्र्यात् रागद्वेषानधीनत्वात् सुखं मनःप्रसादम्, आप्नोति यतः स्वातन्त्र्यात् परं ज्ञानं प्राप्नोति। तथा स्वातन्त्र्यात् निर्वृतिं नित्यसुखं गच्छेत् प्राप्नुयात्। अत एव स्वातन्त्र्यात् परमं पदं स्वस्वरूपविश्रान्तिं गच्छेत्॥५०॥

अकर्तृत्वम् इति। यदा स्वात्मनः अकर्तृत्वम् अभोक्तृत्वं मन्यते, तदा समस्ताः चित्तवृत्तयः क्षीणा भवन्त्येव, अमुकं कर्म अहं करिष्यामि, अमुकं मे भोग्यं भवतु इत्यादि चित्तवृत्त्यनुदये तन्मूलानामन्यासामपि चित्तवृत्तीनामनुदयादित्यर्थः॥५१॥

उच्छृङ्खला इति। धीरस्य वीतस्पृहस्य अकृतिका अकृत्रिमा, उच्छृङ्खलापि शान्तिरहितापि स्थितिः शोभते सस्पृहचित्तस्य मूढस्य तु कृत्रिमा न शोभते इत्यर्थः॥५२॥

निरस्तावलम्बनानां ज्ञानिनां तु भोगत्यागयोरप्यनाग्रह इत्याह विलसन्ति इति। निरस्तावलम्बना धीराः ज्ञानिनः

निरस्तकल्पना धीरा अबद्धा मुक्तबुद्धयः ॥५३॥
श्रोत्रियं देवतां तीर्थमङ्गनां भूपतिं प्रियम् ।
दृष्ट्वा संपूज्य धीरस्य न कापि हृदि वासना ॥५४॥
भृत्यैः पुत्रैः कलत्रैश्च दौहित्रैश्चापि गोत्रजैः ।
विहस्य धिक्कृतो योगी न याति विकृतिं मनाक् ॥५५॥
सन्तुष्टोऽपि न सन्तुष्टः खिन्नोऽपि न च खिद्यते ।
तस्याश्चर्यदशां तां तां तादृशा एव जानते ॥५६॥
कर्तव्यतैव संसारो न तां पश्यन्ति सूरयः ।

---

कदाचित्प्रारब्धवशात् महाभोगैः विलसन्ति क्रीडन्ति कदाचित्प्रारब्धवशात्, गिरिगह्वरान् पर्वतवनानि विशन्ति धीरमाः, अबद्धाः पाशबन्धरहिताः यतो मुक्तबुद्धयः, कल्पनाध्यासरहितबुद्धय इत्यर्थः ॥ ५३ ॥

श्रोत्रियम् इति । धीरस्य ज्ञानिनः श्रोत्रियदेवतातीर्थपूजने सति हृदि कापि वासना धर्मार्थकामवासना न जायते, तथा अङ्गनां भूपतिं प्रियं पुत्रादिकं च दृष्ट्वा कापि काम्यपदार्थवासना न जायते, सर्वत्र समबुद्धित्वादित्यर्थः ॥ ५४ ॥

भृत्यैः इति । भृत्यादिभिर्विहस्य उपहस्य धिक्कृतः तिरस्कृतो योगी मनाक् किञ्चिदपि विकृतिं चित्तक्षोभं न याति, रागद्वेषहेतोर्मोहस्याभावात् इत्यर्थः ॥ ५५ ॥

सन्तुष्टः इति । लोकदृष्ट्या सन्तोषादियुक्तोऽपि वस्तुतः तद्रहितः, तस्य ज्ञानिनः तां ताम् आश्चर्यदशां तादृशा एव ज्ञानिनः जानते ॥ ५६ ॥

कर्तव्यतैव इति, कर्तव्यतैव ममेदं कर्तव्यमिति कार्य-

निवृत्तिरपि मूढस्य प्रवृत्तिरुपजायते ।
प्रवृत्तिरपि धीरस्य निवृत्तिफलभागिनी ॥ ६१ ॥
परिग्रहेषु वैराग्यं प्रायो मूढस्य दृश्यते ।
देहे विगलिताशस्य क्व रागः क्व विरागता ॥६२॥
भावनाभावनासक्ता दृष्टिर्मूढस्य सर्वदा ।
भाव्यभावनया सा तु स्वस्थस्यादृष्टिरूपिणी ॥६३॥

---

प्राकृतजनवत् आर्तिः खेदो न जायते कुतः स्वभावात् साक्षात् ज्ञातानन्दस्य स्वभावादात्मसामर्थ्यादित्यर्थः । स गतक्लेशो ज्ञानी महाह्रद इव अक्षोभ्यो निर्विकारः सुशोभते ॥ ६० ॥

निवृत्तिः इति । लोकदृष्ट्या प्रतीयमानापि मूढस्य बाह्ये-न्द्रियव्यापाराणां निवृत्तिः, प्रवृत्तिस्वरूपैव जायते अहङ्कारा-दीनामनिवृत्तित्वात्, धीरस्य ज्ञानिनः लोकदृष्ट्या प्रारब्ध-वशात् प्रतीयमानापि प्रवृत्तिरपि निवृत्तिफलभागिनी मुक्ति-पर्य्यवसायिनी स्यात् । अहं करोमीत्यभिमानाभावादित्यर्थः ॥ ६१

परिग्रहेषु इति । मूढस्य देहाभिमानिनस्तत्सम्बन्धितया परिगृहीतेषु धनदारादिषु प्रायो बाहुल्येन वैराग्यं दृश्यते, देहे विगलिताशस्य क्व तत्सम्बन्धिनि पुत्रकलत्रादौ रागः स्यात्, क्व च गृहत्यागादौ विरागता स्यात्, रागविरागयोरभावे तत्-सम्बन्धिषु रागविरागयोर्वक्तुमशक्यत्वात् एवेत्यर्थः ॥ ६२ ॥

भावना इति । मूढस्य दृष्टिः सर्वदा भावनायाम् अभा-वनायां वा सक्ता, अहं भावनां करोमि यद्वाहमभावनां करो-मीत्यहङ्कारात् स्वस्थस्य आत्मनिष्ठस्य तु सा दृष्टिः, भाव्यभाव-नया दृश्यचिन्तया उपलक्षितापि अदृष्टिरूपिणी दृश्यदर्शन-रहितरूपैव स्यात्, अहं करोमीत्यभिमानाभावादित्यर्थः ॥ ६३ ॥

सर्वारम्भेषु निष्कामो यश्चरेद्बालवत् मुनिः।
न लेपस्तस्य शुद्धस्य क्रियमाणेऽपि कर्मणि ॥६४॥
स एव धन्य आत्मज्ञः सर्वभावेषु यः समः।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन्निस्तर्षमानसः ६५
क्व संसारः क्व चाभासः क्व साध्यं क्व च साधनम्।
आकाशस्येव धीरस्य निर्विकल्पस्य सर्वदा ॥६६॥
स जयत्यर्थसन्यासी पूर्णस्वरसविग्रहः।
अकृत्रिमोऽनवच्छिन्ने समाधिर्यस्य वर्त्तते ॥६७॥

---

ननु साहम्यभावेन क्रियमाणेऽपि तस्य दृष्टिः कथं दृश्यानासक्तिरित्याशङ्क्य निष्कामत्वादित्याह सर्वारम्भेषु इति। यो बालवत् निष्कामः सन् प्राक्तनवशात् सर्वारम्भेषु चरति प्रवर्त्तते, तस्य शुद्धस्य अहङ्कारमलवर्जितस्य कर्मणि क्रियमाणे लेपो न कर्त्तृता स्यात् अहङ्काराभावादित्यर्थः ॥ ६४ ॥

एवंविधोऽतिधन्य इत्याह स एव इति। स एव आत्मज्ञः धन्य एव नान्यः यः सर्वभावेषु समः आत्मबुद्धिः अतएव निस्तर्षमानसः विगततृष्णचित्तो भवति, किं कुर्वन् पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् अपि ॥ ६५ ॥

तस्यैव धन्यत्वे युक्तिमाह क्व इति। धीरस्य ज्ञानिनः अत एव सर्वदा विकल्परहितस्य संसारः प्रपञ्चः क्व, अतएव तत्प्रतिभासश्च क्व, अतएव साध्यं स्वर्गादिकं क्व, अतएव साधनं यागादिकं क्व न क्वापीत्यर्थः ॥ ६६ ॥

स जयति इति। सः अर्थसन्यासी दृष्टादृष्टप्रयोजनशून्यः अतः पूर्णस्वरसः पूर्णस्वभावो विग्रहः स्वरूपं यस्य स पूर्णस्वरस-

बहुनात्र किमुक्तेन ज्ञाततत्त्वो महाशयः ।
भोगमोक्षनिराकाङ्क्षी सदा सर्वत्र नीरसः ॥६८॥
महदादि जगद्द्वैतं नाममात्रविजृम्भितम् ।
विहाय शुद्धबोधस्य किं कृत्यमवशिष्यते ॥ ६९ ॥
भ्रमभूतमिदं सर्वं किञ्चिन्नास्तीति निश्चयी ।
अलक्ष्यस्फुरणः शुद्धः स्वभावेनैव शाम्यति ॥७०॥

---

विग्रहो जयति सर्वोत्कर्षेण वर्त्तते, सः कः? यस्य अकृत्रिमः स्वाभाविकः अनवच्छिन्ने पूर्णस्वरूपे समाधिः वर्त्तते स जयतीत्यर्थः ॥ ६७ ॥

ज्ञाततत्त्वस्य तु सर्वत्र निराकाङ्क्षत्वमेव मुख्यं लक्षणमित्याह बहुना इति । अत्र ज्ञानिनि बहुना उक्तेन लक्षणेन किं प्रयोजनं, यतो ज्ञाततत्त्वो महाशयः । महाशयत्वं विवृणोति भोगमोक्षनिराकाङ्क्षी इति । भोगमोक्षयोः उभयोः निराकाङ्क्षी अतएव सदा सर्वत्र भोगमोक्षसाधनेषु नीरसः निरनुरागः ॥६८॥

किं च महदादि इति । महदादि महदहङ्कारपञ्चतन्मात्रापञ्चमहाभूतभौतिकजगद्रूपं द्वैतं नाममात्रेणैव विजृम्भितं विभिन्नमिव भातं, न तु वास्तवं "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतेः । अतएव तत् सर्वं विहाय स्थितस्य अतएव शुद्धबोधस्य अप्रकाशविषयाभावरूपस्य किं कृत्यमवशिष्यते, सर्वदा सच्चिदानन्दाधिगमेनैव कृतकृत्यत्वादिति भावः ॥ ६९ ॥

ननु तथापि अनर्थप्राप्त्यर्थं प्रयत्नः कर्त्तव्य इत्याह भ्रमभूतम् इति । अविद्यातत्कार्याकारि इति इदं सर्वं भ्रमभूतं

शुद्धस्फुरणरूपस्य दृश्यभावमपश्यत: ।
क्व विधि: क्व च वैराग्यं क्व त्याग: क्व शमोऽपि वा ७१
स्फुरतोऽनन्तरूपेण प्रकृतिं च न पश्यत: ।
क्व बन्ध: क्व च वा मोक्ष: क्व हर्ष: क्व विषादता ७२
बुद्धिपर्य्यन्तसंसारे मायामात्रं विवर्त्तते ।
निर्ममो निरहङ्कारो निष्काम: शोभते बुध:॥७३॥
अक्षयं गतसन्तापमात्मानं पश्यतो मुने: ।

---

भ्रमेणैव कल्पितम्, अतएव इदं किञ्चित् किमपि वास्तवं नास्तीति निश्चयी अन्तश्चस्फुरण: चिन्मात्रप्रतिभानवान् अतएव शुद्ध: स्वरूपसाक्षात्कारेण बाधिताध्यस्तमलत्वात् स्वभावेनैव शान्तो न तु शान्त्यर्थं ज्ञानातिरिक्तमपेक्ष्यमित्यर्थ: ॥ ७० ॥

शुद्ध इति । शुद्धस्फुरणरूपस्य स्वप्रकाशचिद्रूपस्य अतएव दृश्यभावं दृश्यपदार्थम् अपश्यत:, क्व कुत्र कर्मणि विधि:, क्व केषु वा विषयेषु वैराग्यं, क्व केषु पदार्थेषु त्याग:, क्व केभ्य: पदार्थेभ्य: शमोऽपि वा कार्य्य: । दृश्यपदार्थस्यैवास्फुरणात् इत्यर्थ: ॥ ७१ ॥

स्फुरत: इति । चिद्रूपेणैव प्रकाश्यमानस्य बन्धादिकं नास्ति इत्यर्थ: ॥ ७२ ॥

किञ्च बुद्धि इति । बुद्धि: आत्मज्ञानमेव पर्य्यन्तो नाशो यस्य तस्मिन् संसारे मायामात्रं मायाप्रकल्पितं चैतन्यं विवर्त्तते, अतात्त्विकं अन्यदाकारं प्राप्नोति अतो बुधो विद्वानतात्त्विके शरीरे निरहङ्कार: तत्सम्बन्धिनि कलत्रादौ निर्मम:, अतएव निष्काम: अतएव शोभते दीप्यते कामनाहतत्वात् ॥ ७३ ॥

क्व विद्या च क्व वा विश्वं क्व देहोऽहं ममेति वा ॥७४
निरोधादीनि कर्माणि जहाति जडधीर्यदि ।
मनोरथान् प्रलापांश्च कर्तुमाप्नोत्यतत्क्षणात् ॥७५॥
मन्दः श्रुत्वापि तद्वस्तु न जहाति विमूढताम् ।
निर्विकल्पो बहिर्यत्नादन्तर्विषयलालसः ॥ ७६ ॥
ज्ञानाद्गलितकर्मा यो लोकदृष्ट्यापि कर्मकृत् ।
नाप्नोत्यवसरं कर्तुं वक्तुमेव न किञ्चन ॥ ७७ ॥

---

अक्षयम् इति । अक्षयम् अविनाशिनम्, अतएव सन्ताप-रहितम् आत्मानं पश्यतो मुनेः, क्व विद्या क्व शास्त्रादीत्यर्थः । क्व च वा विश्वं क्व च देहः अहं ममेति वा क्व, आत्मातिरिक्तस्य विद्याविद्यादेः स्फुरणादित्यर्थः ॥ ७४ ॥

आत्मज्ञस्य द्वैतानर्थनिवृत्तिरित्युक्तमज्ञस्य तु चित्तनिरोधा-दीनि अपि कर्माणि कुचर्यौषधप्रायाणीत्याह निरोधादीनि इति । यदि जडधीः चित्तनिरोधादीनि जहाति, तर्हि अतत्-क्षणात् तत्क्षणादेव तदादारभ्य मनोरथान् प्रलापान् कर्तव्या-कर्तव्यालापान् कर्तुमाप्नोति प्रवर्त्तते । तथा च मूढस्य चित्त-निरोधादिकर्मविधिर्वरमित्यर्थः ॥ ७५ ॥

मूढस्य आत्मश्रवणमप्यनर्थकमित्याह मन्द इति । मन्दो मूर्खस्तदात्मवस्तु श्रुत्वापि विमूढतां न जहाति, मलिनचित्तस्य श्रवणादपि ज्ञानानुदयात् । अतएव मूढः यत्नात् बहिर्दृष्ट्या निर्विकल्पो निर्व्यापारोऽपि अन्तर्मनसि विषये लालसोऽनुरागी भवतीत्यर्थः ॥ ७६ ॥

ज्ञानी तु लोकदृष्ट्या कर्म कुर्वाणोऽपि अकर्त्ता एव इत्याह

क्व तमः क्व प्रकाशो वा हानं क्व च न किञ्चन ।
निर्विकारस्य धीरस्य निरातङ्कस्य सर्वदा ॥ ७८ ॥
क्व धैर्य्यं क्व विवेकित्वं क्व निरातङ्कतापि वा ।
अनिर्वाच्यस्वभावस्य निःस्वभावस्य योगिनः ॥७९॥
न स्वर्गो नैव नरको जीवन्मुक्तिर्न चैव हि ।
बहुनात्र किमुक्तेन योगदृष्ट्या न किञ्चन ॥ ८० ॥
नैव प्रार्थयते लाभं नालाभेनानुशोचति ।

---

ज्ञानात् इति । यः ज्ञानात् गलितकर्मा गलितक्रियाभ्यासः स लोकदृष्ट्या कर्मकृदपि किञ्चन कर्त्तुं वक्तुमेव अवसरं नाप्नोति, अहं कर्म करिष्यामीति वक्तुमपि अवसरं नाप्नोति । कर्माव-सरस्तु दुरापास्त इति भावः ॥ ७७ ॥

विद्वांस्तु तमःप्रकाशादिकं न पश्यतीत्याह क्व इति । धीरस्य ज्ञानिनः, अत एव निर्विकारस्य निरस्तशोकादि-विकारस्य तमः क्व, तमसोऽभावे च तद्विरुद्धः प्रकाशो वा क्व निरातङ्कस्य कालादिभयशून्यस्य हानं क्व च, न क्वापीत्यर्थः । अनुरागादिशून्यत्वाच्च किञ्चन किमप्यादानादिकर्मापि क्व च न, न क्वापीत्यर्थः ॥ ७८ ॥

ज्ञानी तु अनिर्वाच्यस्वभाव इत्याह क्व धैर्य्यमिति । योगिनः ज्ञानिनः, अत एव निःस्वभावस्य अत एव अनिर्वाच्यस्वभा-वस्य धैर्य्यं क्व, विवेकित्वं च क्व, निरातङ्कता निर्भयता अपि क्व इत्यर्थः ॥ ७९ ॥

ज्ञानिनः तत्त्वदृष्ट्या तु स्वर्गनरकमोक्षादिकं किञ्चिदपि नास्तीत्याह न स्वर्गः इति । सुगमः श्लोकः ॥ ८० ॥

धीरस्य शीतलं चित्तममृतेनैव पूरितम् ॥ ८१ ॥

न शान्तं स्तौति निष्कामो न दुष्टमपि निन्दति ।
समदुःखसुखस्तृप्तः किंचित् कृत्यं न पश्यति ॥८२॥

धीरो न द्वेष्टि संसारमात्मानं न दिदृक्षति ।
हर्षामर्षविनिर्मुक्तो न मृतो न च जीवति ॥८३॥

निःस्नेहः पुत्रदारादौ निष्कामो विषयेषु च ।
निश्चिन्तः स्वशरीरेऽपि निराशः शोभते बुधः ॥८४॥

---

ज्ञानिनश्चित्तं तु प्राणमानृतापादिविकाररहितत्वादमृते-नैव परमानन्देनैव पूरितमित्याह नैव इति । लाभे न प्रीय-ते, अलाभेन सुवर्णाद्यलाभेन न अनुशोचति । अत एव धीरस्य चित्तममृतेनैव परमानन्देनैव पूरितं सत् शीतलम्-आध्यात्मिकादितापरहितमित्यर्थः ॥ ८१ ॥

उक्तमर्थमेवार्थं पुनःपुनर्भङ्गिविशेषेण वर्णयति । ज्ञान-दशायाः सर्वोत्कृष्टत्वख्यापनाय न शान्तमिति । निष्कामो विद्याकामकर्मक्षीणो ज्ञानी शान्तं शान्त्यादिगुणवत्त्वगुणयुक्तं न स्तौति नापि दुष्टं निन्दति, अतः सन् समदुःखसुखी भवति, निष्कामत्वात् किंचित्कृत्यं न पश्यति ॥ ८२ ॥

धीर इति । धीरो ज्ञानी संसारं न द्वेष्टि, संसारादर्शि-त्वात् बाधितानुवृत्त्याभासात्, तथा आत्मानं न दिदृक्षति, अवाप्त-साक्षात्कारत्वात् । अत एव हर्षामर्षविनिर्मुक्तः तथा जीवन-मरणादिरहितः अद्वैतरूपत्वादित्यर्थः ॥ ८३ ॥

निःस्नेह इति । निराशो बुधः शोभते दीप्यते, कीदृशः

तुष्टिः सर्वत्र धीरस्य यथापतितवर्त्तिनः ।
स्वच्छन्दं चरतो देशान्यत्रास्तमितशायिनः ॥ ८५ ॥

पततूदेतु वा देहो नास्य चिन्ता महात्मनः ।
स्वभावभूमिविश्रान्तिविस्मृताशेषसंसृतेः ॥ ८६ ॥

अकिञ्चनः कामचारो निर्द्वन्द्वश्छिन्नसंशयः ।
असक्तः सर्वभावेषु केवलो रमते बुधः ॥ ८७ ॥

निर्ममः शोभते धीरः समलोष्टाश्मकाञ्चनः ।

---

पुत्रदारादौ निःस्नेहः प्रीतिरहितः, विषयेषु निष्कामः भोगेच्छारहितः, स्वशरीरेऽपि भोजनादिचिन्तारहितः ॥ ८४ ॥

तुष्टिः इति । धीरस्य ज्ञानिनः, यथापतितेन यथाप्राप्तेन वर्त्तते तिष्ठति तस्य यथापतितवर्त्तिनः, सर्वत्र प्रारब्धप्राप्ते सदसत्सुनि च तुष्टिः आत्मतोष एव भवतः तथा, स्वच्छन्दम् अनपेक्षितं प्रारब्धवशात् नानादेशान् विचरतः यत्र वने वा नगरे वा सूर्योऽस्तमितः तत्रैव शायिनः शयनं कुर्वत एवेत्यर्थः ॥ ८५ ॥

पततु इति । देहः पततु म्रियतां वा अथवा उदेतु जीवतु वा, उभयथापि अस्य ज्ञानिनः चिन्ता न भवति, योऽयम् स्वभावो नाम निजात्मस्वरूपं स एव भूमिः तत्र विश्रान्त्या विस्मृत-समस्तसंसारस्य ॥ ८६ ॥

अकिञ्चनः इति । केवलो निर्विकारो बुधो रमते, योऽयम् अकिञ्चनः नास्ति किञ्चित् परिग्रहीतं यस्य सः अकिञ्चनः । अत एव कामचारः विधिनिषेधाद्यविषयः स्वच्छन्दचारी, अत एव निर्द्वन्द्वः सुखदुःखादिशून्यः छिन्नसंशयः देहात्मसंशयशून्यः सर्वेषु भावेषु विषयेषु असक्तः आसक्तिशून्य एवेत्यर्थः ॥ ८७ ॥

सुभिन्नहृदयग्रन्थिर्विनिर्धूतरजस्तमः ॥ ८८ ॥
सर्वत्रानवधानस्य न किंचिद्वासना हृदि।
मुक्तात्मनो वितृप्तस्य तुलना केन जायते ॥८९॥
जानन्नपि न जानाति पश्यन्नपि न पश्यति।
ब्रुवन्नपि न च ब्रूते कोऽन्यो निर्वासनादृते ॥९०॥
भिक्षुर्वा भूपतिर्वापि यो निष्कामः स शोभते।
भावेषु गलिता यस्य शोभनाशोभना मतिः ॥९१॥

---

निर्मम इति। धीरो ज्ञानी शोभते दीप्यते यतो निर्ममः, अत एव समलोष्टाश्मकाञ्चनः ज्ञानवशेन सुभिन्नो हृदयग्रन्थिः अहङ्कारो यस्य स तथा, विनिर्धूते रजस्तमसी यस्य सः ॥ ८८ ॥

सर्वत्र इति। सर्वत्र सर्वेषु विषयेषु अनवधानस्य अवधानरहितस्य तथा न किंचिद्वासना हृदि मुक्तात्मनः कर्तृत्वाध्यासरहितात्मनः अत एव आत्मानन्देन विशेषतस्तृप्तस्य केन तुलना जायते ज्ञानिव्यतिरिक्तस्य ईदृशत्वाभावादित्यर्थः ॥८९॥

अतुलनामेव विशेषेण विशदयति जानन् इति। निर्वासनात् ज्ञानिनः ऋते अन्यः को लोकदृष्ट्या मनसा जानन्नपि वस्तुतो न जानाति। तथा चक्षुषा पश्यन्नपि वस्तुतो न पश्यति, ब्रुवन्नपि न च ब्रूते, अहंत्वाभिमानाभावादित्यर्थः ॥९०॥

भिक्षुः इति। यस्य ज्ञानिनः उत्कृष्टेषु भावेषु शोभना अपकृष्टेषु अशोभनत्वावगाहिनी मतिः गलिता। अतएव यो निष्कामः स भूपतिः जनकादिवत् भिक्षुर्वा याज्ञवल्क्यादिवत् शोभते एव, भावेषु निर्विकल्पकत्वात् राज्यं न बन्धायेत्यर्थः ॥९१॥

न स्वाच्छन्द्यं न सङ्कोचः न वा तत्त्वविनिश्चयः ।
निर्व्याजार्जवभूतस्य चरितार्थस्य योगिनः ॥९२॥
आत्मविश्रान्तितृप्तेन निराशेन गतार्त्तिना ।
अन्तर्यदनुभूयेत तत्कथं कस्य कथ्यते ॥ ९३ ॥
सुप्तोऽपि न सुषुप्तौ च स्वप्नेऽपि शयितो न च ।
जागरेऽपि न जागर्त्ति धीरस्तृप्तः पदेपदे ॥ ९४ ॥
ज्ञः सचिन्तोऽपि निश्चिन्तः सेन्द्रियोऽपि निरिन्द्रियः
सुबुद्धिरपि निर्बुद्धिः साहङ्कारोऽनहङ्कृतिः ॥९५॥

---

न इति। योगिनः निर्व्याजं निष्कपटं यत् आ[र्जवम्] ऋजु-बुद्धिस्तद्रूपस्य आत्मनिष्ठत्वात्, चरितार्थस्य पूर्णार्थस्य [अत]ः अर्थ-नाशो वा अन्यत्र स्वाच्छन्द्यं स्वेच्छाचारित्वं न तथा सङ्कोचः प्रवृत्त्यादिसङ्करणं न तत्त्वनिश्चयः न, कर्त्तृत्वं वा न, कर्त्तृत्वा-भ्यासाभावात् ॥ ९२ ॥

आत्मविश्रान्तितृप्तेन इति। आत्मनि विश्रान्त्या स्थित्या तृप्तेन अतएव आशारहितेन अतएव गतार्त्तिना गतदुःखेन ज्ञानिना यत् अन्तःकरणे अनुभूयेत तत्कथं कं प्रकारं धर्म-माश्रित्य कथ्यते, एकस्यैव धर्म्मस्याभावात् कस्य वा अधिकारिणः कथ्यते तादृशाधिकारिणोऽभावादित्यर्थः ॥ ९३ ॥

सुप्तः इति। धीरः सुषुप्तौ न सुप्तः स्वप्नेऽपि शयितो न च जागरेऽपि न जागर्त्ति, अवस्थात्रयवतो या बुद्धिस्तद्विलक्षणात्मज्ञान-त्वात्। अतएव इदमेवाभिप्रेत्याह पदे पदे इति। पदे पदे अविरतं निजानन्दानुभवतृप्तः ॥ ९४ ॥

। सुखी न च वा दुःखी न विरक्तो न सङ्गवान्।
। मुमुक्षुर्न वा मुक्तो न किञ्चिन्न च किञ्चन॥८६॥
वक्षेपेऽपि न विक्षिप्तः समाधौ न समाधिमान्।
ाड्येऽपि न जडो धन्यःपाण्डित्येऽपि न पण्डितः॥८७
मुक्तो यथास्थितिस्वस्थः कृतकर्तव्यनिर्वृतः।
सम: सर्वत्र वैतृष्ण्यान्न स्मरत्यकृतं कृतम्॥८८॥
न प्रीयते वन्द्यमानो निन्द्यमानो न कुप्यति।

---

ज्ञः इति। ज्ञो ज्ञानी लोकदृष्ट्या चिन्तादियुक्तोऽपि स्तुतस्तद्रहितः, चिचिन्मात्रदर्शित्वादित्यर्थः॥ ८५॥

न सुखी इति। लोकगत्या सुखीत्यादिरूपोऽपि वस्तुतस्तद्रहितः, अन्तःकरणाध्यासरहितत्वात्, न विरक्तो विषये रागाभावात्, न वा मुक्तः पूर्वमपि बन्धनाभावात् तथा किञ्चित् देहादिरूपत्वात् तथा किञ्चन न अनिर्वाच्यत्वात्॥ ८६॥

विक्षेपेऽपि इति। धन्यो ज्ञानी लोकदृष्ट्या विक्षेपेऽपि स्तुतो न विक्षिप्तः, अप्रकाशात्मानुभवात्, लोकदृष्ट्या समाधौ तीयमाने अपि न समाधिमान्, अहं त्वाध्यासाभावात्, लोक-दृष्ट्या जाड्ये प्रतीयमाने अपि न जडः ज्ञानुभवशालित्वात्, लोकदृष्ट्या पाण्डित्ये प्रतीयमाने अपि न पण्डितः, पण्डितोऽह-मित्यभिमानाभावात्॥ ८७॥

मुक्तः इति। मुक्तः प्रारब्धवशात् यथा प्राप्तस्थिती स्वस्थमपि स्वस्थचित्तः तथा कृते पूर्वकृते कर्तव्ये च अविद्यमाने कर्मणि निर्वृतः सन्तुष्टः अभिनिवेशराहित्ययुक्तः, अतएव च सर्वत्र समः वैतृष्ण्यात् इदम् अकृतम् इदं च कृतम् इति न स्मरति॥८८॥

नैवोद्विजति मरणे जीवने नाभिनन्दति ॥९९॥
न धावति जनाकीर्णं नारण्यमुपशान्तधीः ।
यथातथा यत्रतत्र सम एवावतिष्ठते ॥ १०० ॥

अथ आत्मविश्रान्त्यष्टकं नामैकोनविंशप्रकरणं प्रारभ्यते ।

तत्त्वविज्ञानसन्दंशमादाय हृदयोदरात् ।
नानाविधपरामर्शशल्योद्धारः कृतो मया ॥ १ ॥

---

न प्रीयते इति । केचित् सांख्यान् वन्द्यमानोऽपि न तुष्यति निन्द्यमानोऽपि न कुप्यति मरणे उपस्थिते सति उद्वेगं न प्राप्नोति, आत्मनो नित्यत्वानुसन्धानात्, अतएव जीवने सति नाभिनन्दति न तुष्यति ॥ ९९ ॥

न धावति इति । उपशान्तधीः पुरुषः जनाकीर्णं प्रदेशं न अनुधावति, न अपि अरण्यं सर्वत्र ब्रह्मत्वात् यथा तथा जनसम्मर्देन तदसम्मर्दप्रकारेण वा यत्र तत्र वने वा पत्तने वा सम एव स्वस्थचित्त एव अवतिष्ठते ब्रह्माकाराकाकारत्वात् ॥ १०० ॥

इति शान्तिशतकं नामाष्टादशप्रकरणं समाप्तम् ।

---

बाध्यबाधकरूपेण ज्ञाते ज्ञाने गुरोर्मुखात् ।
शिष्यस्यात्मनि विश्रान्तिमष्टभिः प्राह सस्फुटम् ॥

एवं तत्त्वज्ञानिनः स्वभावभूतां शान्तिं श्रुत्वा कृतार्थतया गुरुं परितोषयितुमात्मविश्रान्त्यष्टकं शिष्यः कथयति तत्त्वविज्ञानसन्दंशम् इति । हे गुरो ! मया भवतः सकाशात् तत्त्वविज्ञानोपदेशरूपं सन्दंशं जीवकातोपकरणम् आदाय ह-

क्व धर्मः क्व च वा कामः क्व चार्थः क्व विवेकिता।
क्व द्वैतं क्व च वाऽद्वैतं स्वमहिम्नि स्थितस्य मे ॥२॥

क्व भूतं क्व भविष्यद्वा वर्त्तमानमपि क्व वा।
क्व देशः क्व च वा नित्यं स्वमहिम्नि स्थितस्य मे ॥३॥

क्व चात्मा क्व च वानात्मा क्व शुभं क्वाशुभं तथा।
क्व चिन्ता क्व च वाचिन्ता स्वमहिम्नि स्थितस्य मे ॥४॥

क्व स्वप्नः क्व सुषुप्तिर्वा क्व च जागरणं तथा।

---

हृदयोदरात् नानाविधपरामर्श एव यत् शल्यं तस्य उद्धारः अपहारः कृतः ॥ १ ॥

एतदेव स्पष्टयति। क्व धर्मः इति। धर्मार्थकामा अपि हृदयोदरान्निरस्ताः अयिष्णुत्वादित्यर्थः। स्वमहिम्नि स्थितस्य मे मम विवेकिता क्व, द्वैतं वाऽद्वैतं च क्व, विद्याविश्रान्तस्य विवेकानुपयोगात्, "उत्तीर्णे तु परे पारे नौकायाः किं प्रयोजनम्" इति न्यायात्, द्वैतस्य च ज्ञानबाधितत्वात्, अद्वैतस्य द्वैतमापेक्ष्येनाभ्यासविकल्पाद्विवेकादयोऽपि मम न सन्तीत्यर्थः ॥ २ ॥

क्व द्वैतमित्युक्तमेव विशेषतः प्रपञ्चयति क्व भूतम् इति। कालस्यापि ममास्फूर्तेस्तदुपाधिका भूतभविष्यद्वर्त्तमाना अपि न सन्तीत्यर्थः। नित्यं स्वमहिम्नि स्थितस्य मे देशः अपि नास्तीत्यर्थः ॥ ३ ॥

क्व चात्मा इति। अतति व्याप्नोतीति आत्मा सर्वं व्याप्यमपेक्ष्य कथ्यते, स्वमहिम्नि स्थितस्य च मम आत्मादिकं नास्तीत्यर्थः ॥ ४ ॥

क्व तुरीयं भयं वापि स्वमहिम्नि स्थितस्य मे ॥५॥
क्व दूरं क्व समीपं वा बाह्यं क्वाभ्यन्तरं क्व वा।
क्व स्थूलं क्व च वा सूक्ष्मं स्वमहिम्नि स्थितस्य मे ॥६॥
क्व मृत्युर्जीवितं वा क्व लोकाः क्वास्य क्व लौकिकम्।
क्व लयः क्व समाधिर्वा स्वमहिम्नि स्थितस्य मे ॥७॥
अलं त्रिवर्गकथया योगस्य कथयाप्यलम्।
अलं विज्ञानकथया विश्रान्तस्य ममात्मनि ॥८॥

---

क्व स्वप्नः इति। स्वप्नादयो बुद्धेरेवावस्था मम न सन्ति, एतत्त्रितयाभावे तं निरूप्य तुरीयावस्थापि मम नास्ति तथा भयादयोऽपि अन्तःकरणधर्मा मम न सन्तीत्यर्थः ॥ ५ ॥

क्व दूरम् इति। सर्वत्र परिपूर्णस्य मम दूरसमीपादिकं नास्ति, पूर्णमात्रदर्शिनो मम स्थूलसूक्ष्मदृष्टिरपि नास्तीत्यर्थः ॥ ६ ॥

क्व मृत्युः इति। कालत्रयेऽपि सद्रूपस्य मम जीवनमरणे न स्तः, पूर्णमात्रदर्शिनोऽस्य मम लोका भूरादयो न सन्ति, लौकिकं कार्य्यमपि नास्ति, पूर्णस्य मम लक्ष्ये लयः क्व च समाधिश्च क्व ॥ ७ ॥

अलम् इति। धर्मार्थकामकथया योगाभ्यासकथया विज्ञानकथया वा अलम् आत्मनि विश्रान्तस्य मम एतैः प्रयोजनाभावादित्यर्थः ॥ ८ ॥

इति आत्मविश्रान्त्यष्टकं नामैकोनविंशतिकप्रकरणम्।

---

## अथ शिष्यप्रोक्तं जीवन्मुक्तिचतुर्दशकं नाम विंशतितमप्रकरणं प्रारभ्यते।

क्व भूतानि क्व देहो वा क्वेन्द्रियाणि क्व वा मनः।
क्व शून्यं क्व च नैराश्यं मत्स्वरूपे निरञ्जने॥ १॥
क्व शास्त्रं क्वात्मविज्ञानं क्व वा निर्विषयं मनः।
क्व तृप्तिः क्व वितृष्णात्वं गतद्वन्द्वस्य मे सदा॥२॥
क्व विद्या क्व च वाविद्या क्वाहं क्वेदं मम क्व वा।
क्व बन्धः क्व च वा मोक्षः स्वरूपस्य क्व रूपिता॥३॥

---

आत्मविश्रान्त्यभिव्यक्तस्वभावां मुक्तिशालिनीम्।
जीवन्मुक्तिदशां शिष्यश्चतुर्दशभिरब्रवीत्॥

प्रागुक्तात्मविश्रान्तेः फलीभूतां विदुषः स्वभावभूतां जीवन्मुक्तिदशां शिष्यश्चतुर्दशश्लोकैर्निरूपयति क्व भूतानि इति। निरञ्जने सर्वोपाधिसम्बन्धशून्ये मत्स्वरूपे भूतदेहेन्द्रियमनांसि क्व, तर्हि किं शून्यमस्ति नेत्याह क्व शून्यम् इति। न हि सदात्मनि सति शून्यं सम्भवतीत्यर्थः। मयि नैराश्यम् अपि स्वाभाविकं न आशानिरूप्यत्वादित्यर्थः। १।

क्व इति। सदा गतद्वन्द्वस्य मे मम शास्त्रं क्व तज्जन्यं विज्ञानं च क्व, आत्मविश्रान्त्या सर्वस्य गलितप्रायत्वात्, निर्विषयं मनः अपि न, तस्यापि गलितप्रायत्वात् अतएव तृप्तिरपि न, तथा तृप्तिसाध्यं वितृष्णचित्तत्वमपि न, चित्तस्यैव गलितप्रायत्वादित्यर्थः। २।

क्व विद्या इति। मयि क्व विद्याद्यहङ्कारधर्माः इदं बाह्यं वस्तुजातं क्व, अहं क्व, मम सम्बन्धः क्व, द्वितीयस्य सम्बन्धिनो

क्व प्रारब्धानि कर्माणि जीवन्मुक्तिरपि क्व वा।
क्व तद्विदेहकैवल्यं निर्विशेषस्य सर्वदा॥ ४ ॥
क्व कर्त्ता क्व च वा भोक्ता निष्क्रियं स्फुरणं क्व वा।
क्वापरोक्षं फलं वा क्व निःस्वभावस्य मे सदा॥५॥
क्व लोकः क्व मुमुक्षुर्वा क्व योगी ज्ञानवान् क्व वा।
क्व बद्धः क्व च वा मुक्तः स्वस्वरूपेऽहमद्वये॥ ६ ॥
क्व सृष्टिः क्व च संहारः क्व साध्यं क्व च साधनम्।
क्व साधकः क्व सिद्धिर्वा स्वस्वरूपेऽहमद्वये॥ ७ ॥
क्व प्रमाता प्रमाणं वा क्व प्रमेयं क्व च प्रमा।

---

ऽभावात्, तथा बन्धमोक्षौ अपि धर्मौ क्व, अत्र हेतुमाह स्वरूपस्य इति। निर्विशेषस्वरूपस्य मम रूपिता धर्मवार्त्ता क्व, तथा च निर्धर्मके मयि न विद्यादयोऽपि धर्माः सन्तीति फलितार्थः॥३

क्व प्रारब्धानि इति। क्व प्रारब्धानि कर्माणि, तथा जीवन्मुक्तिः तथा विदेहकैवल्यम् एते धर्माः सदा निर्विशेषस्य मे न सन्तीत्यर्थः॥ ४ ॥

क्व कर्त्ता इति। सदा निःस्वभावस्य मे कर्तृत्वभोक्तृत्वनिष्क्रियस्फुरणानि क्व, अतएव अपरोक्षं वृत्तिरूपं च ज्ञानं क्व, फलं विषयावच्छिन्नं यत् फलं चैतन्यं क्व इत्यर्थः॥ ५ ॥

क्व लोकः इति। अहम् इत्येवं रूपे अद्वये अहमद्वये आत्माद्वैते स्वस्वरूपे सति लोकः क्व मुमुक्षुः क्व योगी क्व ज्ञानवान् अपि बद्धः क्व मुक्तश्च क्व इत्यर्थः॥ ६ ॥

क्व सृष्टिः इति। अहमद्वये आत्माद्वैते स्वस्वरूपे सति सृष्टिसंहारौ साध्यसाधने साधकः सिद्धिर्वा क्व॥ ७॥

क्व किञ्चित् क्व न किञ्चिद्वा सर्वदा विमलस्य मे ॥८॥
क्व विक्षेपः क्व चैकाग्र्यं क्व निर्बोधः क्व मूढ़ता ।
क्व हर्षः क्व विषादो वा सर्वदा निष्क्रियस्य मे ॥९॥
क्व चैष व्यवहारो वा क्व च सा परमार्थता ।
क्व सुखं क्व च वा दुःखं निर्विमर्शस्य मे सदा ॥१०॥
क्व माया क्व च संसारः क्व प्रीतिर्विरतिः क्व वा ।
क्व जीवः क्व च तद्ब्रह्म सर्वदा विमलस्य मे ॥११॥
क्व प्रवृत्तिर्निवृत्तिर्वा क्व मुक्तिः क्व च बन्धनम् ।
कूटस्थनिर्विभागस्य स्वस्थस्य मम सर्वदा ॥ १२ ॥

---

क्व प्रमाता इति। सर्वदा विमलस्य उपाधिसम्बन्धमल-शून्यस्य मे प्रमातृप्रमाणप्रमेयप्रमाव्यवहारः क्व, मम किञ्चित् सामान्यतोऽन्यत् पदार्थमात्रं क्व, न च किञ्चिद्वा क्व, पदार्थ-भावेऽपि मम क्व, सर्वथा सम्बन्धशून्यत्वादित्यर्थः ॥ ८ ॥

क्व विक्षेप इति। सर्वदा निष्क्रियस्य मे विक्षेपादिक्रिया क्व इत्यर्थः ॥ ९ ॥

क्व चैष इति। सदा निर्विमर्शस्य विवेचनी वृत्तिज्ञान-शून्यस्य व्यवहारो व्यावहारिकपदार्थज्ञानं क्व, परमार्थताज्ञानं क्व, सुखदुःखादिकमपि क्व इत्यर्थः ॥ १० ॥

क्व माया इति। सर्वदा विमलस्य उपाधिमलशून्यस्य मे मायासंसारौ प्रीतिर्विरतिश्च वैराग्यं क्व, जीवभावो ब्रह्मभावश्च क्व, कार्योपाध्यभावे जीवत्वस्य [illegible]-भावे ब्रह्मत्वस्य च [illegible]त्वादित्यर्थः ॥ ११ ॥

क्व प्रवृत्तिः इति। कूटस्थस्य निष्क्रियस्य तथा निर्विभागस्य

क्वोपदेशः क्व वा शास्त्रं क्व शिष्यः क्व च वा गुरुः।
क्वचास्ति पुरुषार्थो वा निरुपाधेः शिवस्य मे ॥१३
क्व चास्ति क्व च वा नास्ति क्वास्ति चैकं क्व च द्वयम्।
बहुनात्र किमुक्तेन किञ्चिन्नोत्तिष्ठते मम ॥ १४ ॥

अथ संख्याक्रमव्याख्यानं नामैकविंशतितमप्रकरणं प्रारभ्यते।

दश षट् चोपदेशे स्युः श्लोकाश्च पञ्चविंशतिः।
सत्यात्मानुभवोल्लासे उपदेशे चतुर्दश ॥ १ ॥

---

भेदरहितस्य सर्वदा स्वस्थस्य मम प्रवृत्तिनिवृत्ती क्व, मुक्तिबन्धने च क्व इत्यर्थः ॥ १२ ॥

क्व उपदेशः इति। निरुपाधेः उपाधिशून्यस्य तथा शिवस्य नित्यानन्दस्वरूपस्य उपदेशक्रिया क्व, उपदेशकं शास्त्रं च क्व, मायाद्युपाध्यभावे तत्कृतोपदेशस्य चाभावात्। अतएव शिष्यः गुरुश्च क्व, स्वयं शिवस्वरूपस्य च पुरुषार्थो वा क्व चास्ति ॥१३॥

जीवन्मुक्तदशामुपसंहरति क्व चास्ति इति। मम अस्ति इति न स्फुरति। असत्त्वापेक्षत्वात् सत्त्वस्य, तथा नास्ति इत्यपि न स्फुरति सत्त्वापेक्षत्वान्नास्तित्वस्य, अतएव भिन्नः सापेक्षत्वात् ऐकत्वद्वित्वेऽपि मम न स्तः, प्रत्येकं व्यक्तिभेदेन त्रिविधया अन्यकोटिभिरपि वक्तुमशक्यत्वात्। सामान्यत आह बहुना इति। बहुना उक्तेन किं प्रयोजनं मम चिदेकरूपस्य किञ्चिद् अपि न उत्तिष्ठते न प्रकाशते इत्यर्थः॥ १४ ॥

इति जीवन्मुक्तिचतुर्दशकं नाम विंशतिप्रकरणम्।

---

विनये तुचिदीकर्य्यमुदिम पञ्चकत्वयम्।
श्रीकर्त्तव्यां पुरस्तात्य माधातुकमनीं स्फुटाम्॥

षडुल्लासे लये चैवोपदेशे च चतुश्चतुः।
पञ्चकं स्यादनुभवे बन्धमोक्षे चतुष्ककम्॥ २॥
निर्वेदोपशमे ज्ञाने एवमेवाष्टकं भवेत्।
यथासुखे सप्तकं च शान्तौ स्याद्वेदसम्मितम्॥ ३॥
तत्त्वोपदेशे विंशच्च दश ज्ञानोपदेशके।
तत्त्वस्वरूपे विंशच्च शमे च शतकं भवेत्॥ ४॥

---

दश षट् इति। षट् दश षोडश श्लोकाः गुरुणोपदेशे स्युः, सन्ति प्रथमे प्रकरणे पञ्चविंशतिः श्लोकाः शिष्योक्तानुभवोल्लासे द्वितीयप्रकरणे स्युः चतुर्दश श्लोकाः पुनर्गुरुणाक्षेपमुद्रयोक्तोपदेशाख्ये तृतीयप्रकरणे स्युः॥ १॥

षट् उल्लासे इति। षट् श्लोकाः शिष्यप्रोक्तानुभवोल्लासे चतुर्थप्रकरणे स्युः, चत्वारः श्लोका गुरुप्रोक्ते लयाख्ये पञ्चमे प्रकरणे स्युः, पुनश्चत्वारः श्लोका गुरुप्रोक्ते प्रतिवादिसिद्धलयनिषेधोपदेशाख्ये षष्ठे प्रकरणे स्युः, श्लोकानां पञ्चकं शिष्यप्रोक्तेऽनुभवाख्ये सप्तमे प्रकरणे स्यात्। श्लोकानां चतुष्कं गुरुप्रोक्ते बन्धमोक्षेऽष्टमे प्रकरणे स्यात्॥ २॥

निर्वेदोपशमे इति। श्लोकाष्टकं गुरुप्रोक्ते निर्वेदाख्ये नवमे प्रकरणे स्यात्, गुरुप्रोक्तमुपशमाष्टकं नाम दशमं प्रकरणम्, गुरुप्रोक्तं ज्ञानाष्टकं नामैकादशं प्रकरणम्, शिष्यप्रोक्तम् एवमेवाष्टकं नाम द्वादशं प्रकरणम्, शिष्यप्रोक्तं यथासुखसप्तकं नाम त्रयोदशं प्रकरणम्, शिष्यप्रोक्तं शान्तिचतुष्कं नाम चतुर्दशं प्रकरणम्॥ ३॥

तत्त्वोपदेशे इति। विंशति श्लोका गुरुप्रोक्ते तत्त्वोपदे-

अष्टकं चात्मविश्रान्तौ जीवन्मुक्तौ चतुर्दश।
षट् संख्याक्रमविज्ञाने ग्रन्थैकात्म्यं ततः परम् ॥ ५ ॥
विंशत्येकमितैः खण्डैः श्लोकैरात्माग्निमध्यखैः।
अवधूतानुभूतेश्च श्लोकाः संख्याक्रमा अमी ॥ ६ ॥

---

शान्त्याख्ये पञ्चदशे प्रकरणे स्युः, दश श्लोका गुरुप्रोक्ते विशेषोपदेशाख्ये षोडशे प्रकरणे स्युः, विंशति श्लोका गुरुप्रोक्तास्तत्त्वस्वरूपोपदेशाख्ये सप्तदशे प्रकरणे स्युः, गुरुप्रोक्तं शमशतकं नाम अष्टादशं प्रकरणम् ॥ ४ ॥

अष्टकं च इति। शिष्यप्रोक्तमात्मविश्रान्त्यष्टकं नाम एकोनविंशतिकं प्रकरणम् शिष्यप्रोक्तं जीवन्मुक्तिचतुर्दशकं नाम विंशतिकं प्रकरणम्, गुरुप्रोक्तं संख्याक्रमकथनं नामैकविंशतिकं प्रकरणम्। अतःपरं विंशत्येकमितैः खण्डैः श्लोकैर्ग्रन्थैकात्म्यं सख्याग्रन्थखण्डानां चैकात्म्यं समूहरूपतयैकात्मत्वमित्यर्थः ॥ ५ ॥

विंशत्येकमितैः इति। कियद्भिः खण्डैः विंशत्येकमितैः एकविंशतिखण्डैरित्यर्थः। कियद्भिः श्लोकैः आत्माग्निमध्यखैः जीवात्मपरमात्मभेदभिन्नावात्मानौ द्वौ, अग्नयस्त्रयः मध्ये खं च मध्ये शून्यम्। अङ्कानां वामतो गतिरिति न्यायात् अन्ते द्वौ मध्ये खम् आदौ च त्रयं ३०२ इत्यधिकैस्त्रिशतश्लोकैरित्यर्थः।

श्लोकसंख्यामुपसंहरति अवधूत इति। अवधूतानुभूतिरूपोऽयं ग्रन्थस्तस्य संख्याक्रमो विद्यते येषु ते संख्याक्रमा ईदृशाः श्लोका अमी कथिता इत्यर्थः ॥ ६ ॥

इति संख्याक्रमव्याख्यानं नामैकविंशतिप्रकरणम्।

समाप्ता इयमष्टावक्रसंहिता।

---

